termed as the Life (Prāṇa) in the universal see Śakti-Tattva abides as the potential energy of the in which that Life is manifested in the universe.

Further, Śiva-Tattva when used to indicate Lif nothing more than *Prathama Spanda or* first vibra Parama Śiva, as it is noted—

"पस्पन्दे स स्पन्दः प्रथमः शिवतत्त्वमुच्यते त

Śakti-Tattva is the life and soul of the Principl and so its main task consists in controlling and r movement of Life.

September, 1987. } ARN

# PREFACE.

Arthur Avalon, the late editor of the Āgamānusandhāna Samiti, more than six years ago thought of publishing Cidgagana-candrikā which is traditionally ascribed to Kālidāsa. His Highness the Late Mahārājādhirāja Rameshvara Singh Bāhādur of Darbhanga, the then President of the Āgamānusandhāna Sāmiti, whose knowledge of and reverence for the ancient Hindu Śastras was very great also desired the publication of this work which had hitherto been unpublished.

At that time Arthur Avalon was busy in editing the Śāradātilakatantram and the Prapañcasāratantram with the commentaries of Raghava Bhaṭṭa and Padmapādācârya respectively. Inspite of his heavy work he was on the look out for original manuscripts and commentaries on the Cidgagana-Candrikā. He succeeded in securing two copies of original manuscripts of the Cidgagana-candrikā, one from the Government Sanskrit Manuscript Library, Madras and another from the Adyar Theosophical Library; but he had to postpone the publication of the work to a later date, so that the already undertaken might be published first. But as fate would have it, he passed away in the beginning of the last year without proceeding further with the work. Swamī Srī Trivikrama Tīrtha who was a Yogin, personally combining in him the the attributes of a Tantrika, Sādhaka, Philosopher and above all a scholar of a very sound type, took up the responsibility of editing the present book. But he also passed away the year before last. However this small book owes it being largely to the great Swāmiji's vast erudition and first hand knowledge of Tantrik practices.

The text in the Manuscripts from the Government Manuscript Library gives 309 Slokas in full, as mentioned by the author himself, where as the other Manuscript of the Adyar Library is incomplete. For this reason the Text of the Manuscripts secured from the Government Manuscript Library has been mainly followed. But still the Adyar Library Manuscript has been of great value in deciding the precise readings of the Text in several cases. In places, where both the variant readings occuring in the Manuscripts have been found to be equally reasonable, one of them has been mentioned in the foot note.

It will not be perhaps out of place to mention here that it was first decided to give a full translation of all the Ślokas of the text, but this could not be done at present for various reasons, chiefly because no commentary on the text could be found.

If opportunities be forthcoming, the desired translation may be appended in the second edition.

The controversy regarding the identification of Kālidāsa, the author of Cidgagana-candrikā has been purposely avoided. It is difficult to imagine in all seriousness whether the very pen which produced Śakuntalā, Meghadūta and the like and has enchanted the fancy of the people for several centuries did also go to the length of composing this abstruse work on Tantrikism. It is also equally difficult to rest content with the belief that Kālidāsa the author of immortal dramas and poetry was an altogether different person from the author of this Tantrik work. In the body of the Introduction only an attempt has been made to show that most probably the author of this work lived and wrote in the 11th century A. D.

Coming back to the present condition of the Āgamānusansandhāna Samiti, we regret very much to say that by the sad and lamentable demise of His Highness the Mahārājādhirāja Rameshvara Singh Bāhādur of Darbhanga in 1931, the Samiti has lost the devoted services of a guide of no mean culture. His place has been graciouly taken by his able son His Highness Mahārājādhirāja Kamesvara Singh Bāhādur under whose kind patronage and direction the Samiti is at present continuing its work. By the sudden death of Arthur Avalon the Samiti has been deprived of the learned services of a sincere scholar and it is a hard task to fill up the gap caused by his demise

For the publication of this book, we owe a great debt of gratitude to Dr. N. K. Dutt M. A., Ph. D., Principal (officiating) of the Government Sanskrit College, for his invaluable suggestions. This cannot close without words of thanks and gratitude to Prof. Aśoka Nātha Sāstrī M. A., P R. S. of the Calcutta University who inspite of his heavy work took special care and great pains to read the proofs of the Introduction.

*September*, 1937. ARNOLD AVALON.

# चिद्गगनचन्द्रिका

## महाकवि-कालिदास-विरचिता

स्वामि-श्रीत्रिविक्रमतीर्थ-

सम्पादिता

कलिकातानगर्यां

७।ए चालताबागान् लेनस्थ-

आगमानुसन्धानसमितितः

प्रकाशिता

सम्वत् १९९३

कलिकाता—

संस्कृत बुक्डिपो

२८।१ नं कार्णवालिस् स्ट्रीट्

लण्डन—

ल्युजाक् एण्ड को०

४६ नं ग्रेट् रासेल स्ट्रीट्

# ॥ उपोद्घातः ॥

मया किल ललितासहस्रनामभाष्यपठनसमये चिद्गगनचन्द्रिकानाम्ना कालि-दासोक्तिनाम्ना च कानिचिद्रहस्यगर्भाणि पद्यानि पठितानि। ततः कतिपयवर्षानन्तरं योगिनीहृदयदीपिकां वाराणसीतः प्रकाशितां समासाद्य तत्पठनावसरे तत्रोद्धृताः कतिपये श्लोकाश्चिद्गगनचन्द्रिकानाम्ना उट्टंकिताः पठिताः। एवमेव महार्थमंजरी-परिमलमास्वाद्यमानेन चिद्गगनचन्द्रिकानाम्ना तत्रश्लोकाः संगृहीता दृष्टाः पठिताश्च। रहस्योपनिषदर्थं सत्सम्प्रदायानुगतं तत्र तत्रेषत्प्रकटीकृतमतिरम्यां प्रतिपादनप्रणालीं चान्वीक्ष्य मदीयं स्वान्तं श्रद्धाभरेण तत्र तस्मिन्नुपदिष्टे महार्थे समग्रग्रन्थाध्ययने तीव्रामुत्सुकतां संवहन् प्रयतमानमासीत् तदर्थे।

कलिकातायामागतेन मया आगमानुसन्धानसमित्या विद्वन्मान्येन मन्त्रिमहोदयेन सह कथाप्रसंगतो महता परिश्रमेण समानीतं चिद्गगनचन्द्रिका-पुस्तकं स्वीयपुस्तकसंग्रहे सुरक्षितं तिष्ठतीति उक्तम्। नैतावदपि तु द्रष्टुं पठितुमपि च तैर्दत्तं सह प्रेम्णा। एतद्विषये संभृता चिरकालीनाऽऽशाऽकस्मात् पूर्णा जातेति हर्षनिर्भरस्वान्तेन मया तद्रात्रौ निद्रापि न कृता केवलं ग्रन्थपठने तदर्थचिन्तने च निशा सकलैवातिवाहिता। भगवती सर्वस्याद्या कालिका तत्र ग्रन्थकर्त्रा स्तुता। मनोहरै रहस्यगर्भैः पद्यैर्गुम्फिता सा स्तुतिर्मया भूयो भूयः पठिता। तदनन्तरं तैर्महोदयैर्ज्ञातप्रभावैः सा प्रकाशयितुं स्वकीयसमितिद्वारा तान्त्रिकग्रन्थमालायां निश्चयः कृतः। स्वेन सम्पादितं च ग्रन्थस्य प्रतिकृतियुग्मं समर्प्य मह्यं स भारो मत् स्कन्धे विनिवेशितः। वाङ्मयीयं पूजा श्रीमदनिरुद्धसरस्वत्या इति मत्वा तत्रासमर्थमात्मानं जानन्नपि मया साहसमंगी-कृतम्। यच्चान्यथाकृतं पश्यन्त्यत्र विद्वांसस्तत्र क्षमाप्रार्थनामेव मया करिष्यमाणां स्वीकृत्य दयापूर्णान्तरंगाः समुचितं ज्ञापयिष्यन्त्येव धर्म्मधियो हि।

अस्य ग्रन्थस्य प्रतिकृतिद्वयी एव समासादिता तैर्महोदयैः। एका मद्रास-गवर्णमेण्टस्य हस्तलिखितपुस्तकसंग्रहात् द्वितीया च अड्यारस्थित-थियोसफिकैल सोसाइटी-संगृहीत-पुस्तकसंग्रहात्। उभयोरपि मिथो बहुषु स्थलेषु पाठभेदबाहुल्यं न दृश्यत एव। तथापि परस्परं साहाय्यं ताभ्यां कुर्वतीभ्यां प्रव[illegible]कार्यार्थं यथामति शुद्धां प्रतिकृतिं निर्मातुं बहूपकृतम्। मद्रासादुपलब्धप्रतिकृतिमध्ये [illegible] कर्तृनिर्दिष्टा सम्पूर्णा समुपलब्धा। अड्यारादुपलब्धपुस्तके तु सम्पूर्णा स्तुतिर्नो-पलब्धा अतएव मद्रासपुस्तकमेव प्राधान्येनावलम्ब्य मया [illegible] कृता।

श्लोका अड्यार-पुस्तके न स्थिता स्तेषु च ग्रन्थकारेण स्वीयं नाम ग्रन्थस्य श्लोक-संख्या ग्रन्थवर्णितवस्तुमूलं च निदर्शितं स्पष्टतयैव। ललितासहस्रनामभाष्ये, योगिनीहृदयदीपिकायां महार्थमंजरीपरिमले च ये ये श्लोका उद्धृतास्ते ते सर्वेऽपि मद्रास-पुस्तके दृश्यन्ते। अत एव कथितुं पार्य्यते यत् सम्पूर्णोऽयं रहस्योपदेशनापरो ग्रन्थ आसादित इति।

ग्रन्थस्यास्य कर्त्ता कालिदास इति ग्रन्थपरिशीलनेन निश्चेतुं शक्यम्।

भासुरानन्दनाथेन तान्त्रिकाणां पूज्यतमेन तन्त्रग्रन्थमहासागरमन्थनेनाष्टादश-विद्यापारदृश्वना तान्त्रिकेष्वाप्ततमेन स्वीये सौभाग्यभास्करेऽनेकशः स्वपक्षपोषकत्वेन सादरं समुदाहृतानि चिद्गगनचन्द्रिकावचनानि कालिदासोक्त्यपरनाम्ना चापि।

भास्करराय-( भासुरानन्दनाथ ) पूर्वभाविना अमृतानन्दनाथेति सुगृहीतनाम-धेयेन सत्सम्प्रदायपरम्पराप्राप्तश्रीविद्योपासनेन प्रकाण्डविदुषा स्वीययोगिनीहृदयदीपि-कायामपि प्रमाणतयैव स्वीयप्रतिपाद्यमर्थं समर्थयितुमुद्धृतानि चिद्गगनचन्द्रिका" वचनानि।

महेश्वरानन्दनाथेत्यपरनामधेयेन गोरक्षनाथेनापि महार्थमंजरीं महार्थमंजरीपरि-मलं चेति कारिकां टीकां च वितन्वानेन तन्त्रोक्तसाधनमार्गे सिद्धपदमासादितवता परमरहस्यमार्गज्ञाततत्वेनास्य ग्रन्थस्य वचनानि तत्र तत्रोदाहृतानि बहूनि।

एवमेवास्मिन्नपि स्तुतिग्रन्थे श्लोकेषु ३, ३०६, ३०७, ३०८ संख्यकेषु एवं चतुर्षु स्थलेषु सुस्पष्टं स्वीयमभिधानं प्रकटीकृतं कालिदास इति। अत एवास्य कर्त्ता कालिदास इत्यसंशयं वक्तुं शक्यम्।

कालिदासेति शब्दस्य यथार्थवादित्वमस्मिन् ग्रन्थे भगवत्याद्यैव स्तुतेति सत्यमिति ज्ञायते। स्वेनापि कविना २७२ श्लोके स्वोदितं "दासजल्पित" मिति उक्तवता कालि-दासनाम सार्थकमेवेति परिदर्शितम्।

जनश्रुतिरेवं किल श्रुता—कालिदासेनाराध्य कालीं सम्प्राप्य प्रसादं महाकवित्व-मुपलभ्य महाकाव्यादिक-मारचितमिति। सा जनश्रुतिः सत्यैव समूला चेति ग्रन्थस्यास्य दर्शनेन संशयं निर्मुच्य प्रमाणपदवीमारूढा। तावत् सा संशयपदवीं वर्तमानाऽऽसीत् यावत्पर्यन्तमयं ग्रन्थो नाधिगतः। इदानीं तु संप्राप्ते ग्रन्थरत्ने उपासनारहस्यमार्गबोधके तत्र तत्र संबोधिते "कालि" इति "कालिदासेति स्वात्मानं प्रत्यभिज्ञापिते नास्ति शंका-पंकलेशोऽपि। ज्ञायत एव स्वाभिमानं विहाय स्वेष्टदेवतादासभावं तन्महिमानं च संबोधयितुं स्वीयं नाम प्रत्यभिख्यानकारकं स्वयमेव स्वीकृतं कालिदास इति।

श्रीतन्त्रवार्त्तिककार-कुमारिलभट्टपादात् पूर्वमेव महाकवि-कालिदासो बभूव। रेनोदाहृतमभिज्ञानशाकुन्तलगतं श्लोकार्द्धं तन्त्रवार्तिके। भगवत्पूज्यपादेन ए शारीरकमीमांसाभाष्ये भट्टपादमतमनूद्य खण्डितम्। विद्यारण्येन

शंकरदिग्विजये भगवत्पादेन सह कुमारिलपादानां संवादो ह्यभूदिति लिखितमास्ते। अतोऽनुमीयते हि शंकराचार्य्यसमकालीना भट्टपादा इति। अत एतत सिद्धं यद् आचार्यपादानां प्रादुर्भावात्पूर्वमेव कालिदासो बभूव।

कालिदासेनायं स्तुतिः श्रीसिद्धनाथकृतायाः क्रमस्तुते रहस्यमावेदयितुं पंजिका रूपेणारचितेति ३०६ श्लोकमध्ये स्पष्टमुक्तम्। अयं श्रीसिद्धनाथः शम्भुनाथेत्यपरनामा आसीदिति पृथ्वीधराचार्येणाप्युक्तं भुवनेशीस्तोत्रे स्वोपज्ञे। तन्त्रालोकादिप्रमाणभूतानेकतन्त्रशास्त्रनिबन्धरचयितुरभिनवगुप्तस्य गुरुपरम्परायामासीदयं शम्भुनाथः।

तन्त्रसारे—

"श्रीशम्भुनाथभास्करचरणनिपातप्रभापगतसंकोचम्।
अभिनवगुप्तहृदम्बुजं विचिनुत महेशपूजनहेतोः॥"

तन्त्रालोके—

जयताज्जगदुद्धृति क्षमोऽसौ
भगवत्या सह शम्भुनाथ एकः।
यदुदीरित शासनांशुभिर्मे
प्रकटोऽयं गहनोऽपि शास्त्रमार्गः॥

तत्रैव—

कश्चिद्दक्षिणभूमिपीठवसतिः श्रीमान् विभुर्भैरवः
पंचस्रोतसि सातिमार्गविभवे शास्त्रे विधाता च यः।
लोकेऽभूत् सुमतिस्ततः समुदभूत्तस्यैव शिष्याग्रणीः
श्रीमाञ्छम्भुरिति प्रसिद्धिमगमज्जालन्धरात् पीठतः॥

श्रीसुमतिनाथस्य श्रीसोमदेवः शिष्यः। तस्य श्रीशम्भुनाथ इति हि आयातिक्रमविदः।

श्रीशम्भुनाथः प्रखरतपोबलसम्पन्नः शास्त्रमर्मज्ञः क्रियायां चातिकुशल आसीत्।

तन्त्रसारे—

आकृष्टावुद्धृतौ वा मृतजनविषये कर्षणीयेऽथ जीवे।
योगः श्रीशम्भुनाथागमपरिगमितो जालनामा मयोक्तः॥

काश्मीर—प्रदेश—प्रसिद्ध—त्रिकवादे महान् पण्डितश्चासीत्। तेनैव रचिता क्रमस्तुतिः। तत्स्तुतिविवरणकारस्तत् पश्चाद्भाव्येव भवितुमर्हति न तत्पूर्वं। अत एवानुमीयते श्रीशम्भुनाथानन्तरभावी अयं कालिदासः।

अस्मिन् ग्रन्थे भगवत्या आद्यायाः स्तुतिः। सा च विमर्शचतुष्टयमयी। श्लोकसंख्या तु ३१३ परिमिता।

तत्र आद्यो विमर्शः सूत्रस्थानीयः । अस्मिन् श्लोकाः २२ मिताः । तत्र

| श्लोकाङ्क | विषयः | श्लोकाङ्क | विषयः |
|---|---|---|---|
| १ | गणेशस्मरणम् | ११ | शक्तितत्त्वम् |
| २ | शिवस्मरणम् | १२ | ईश्वरतत्त्वम् |
| ३ | कर्तुर्ग्रन्थस्य च नाम | १३ | पूर्णख्यातिः |
| ४ | फलम् | १४ | ब्रह्मस्वरूपम् |
| ५ | शिवतत्त्वम् | १५ | भेदकारणम् |
| ६ | प्रकाशविमर्शरूपिणौ शिवशक्ती | १६।१७ | गुणत्रयवर्णनम् |
| ७ | पूजनफलम् | १८ | ईश्वरशक्तिः |
| ८ | प्रत्यभिज्ञानम् | १९ | ज्योतिर्वर्णनम् |
| ९ | पूर्वे गुरवः | २० | सांख्य-योगयोः फलैक्यम् |
| १० | विश्वोत्पत्तिहेतुः शक्तिमरीचिवृन्दस्मरणम् | २१ | सृष्टिसंहारौ |
| | | २२ | कालस्वरूपम् |

वचनानि ।

द्वितीये च विमर्शे श्लोकाः ५२ मिताः । तत्र तु

| श्लोकाङ्क | विषयः | श्लोकाङ्क | विषयः |
|---|---|---|---|
| १ | विकल्पहेतुः | २२।२३ | खेचर्यादिकम् |
| २ | विमर्शलक्षणम् | २४।२५ | पंचवाहः |
| ३ | अणुता | २६ | उन्मनी |
| ४ | कर्मलोपकारकम् | २७ | प्रकाशः |
| ५ | परभावप्राप्तिः | २८ | चित्तम् |
| ६ | मरीचयः | २९ | वासना |
| ७ | वामाशक्तिः | ३० | जगद्भासकम् |
| ८ से ११ | वाक्चतुष्टयवर्णना | ३१ से ४२ | परतत्त्वम् |
| १२ | पंचवाहता | ४३ | राजानः |
| १३ | परा शक्तिः | ४४।४५ | वाहौ द्वौ |
| १४।१५ | धामवर्णना | ४६ | अहो रात्रिश्च |
| १६।१७ | अनाहतस्वरः | ४७ | सामरस्यम |
| १८ | कलाः | ४८।४९ | षोडशकलाः |
| १९ | मातृका | ५० | परं पदम् |
| २० | नादबिन्दु | ५१ | उपासनासाधनानि |
| २१ | आद्यः स्पन्दः | ५२ | परदेवताभिख्या |

तृतीये तु विमर्शे श्लोकाः १०५ मिताः तेषु च

| श्लोकाङ्क | विषयः | श्लोकाङ्क | विषयः |
|---|---|---|---|
| १ | उपासना | ३७ | दिक्चरी |
| २ | पीठोत्पत्तिः | ३८ | दिक्चरी |
| ३-४-५ | पीठचक्रम | ३९ | मंगला ( गुरुरूपिणी ) |
| ६ | मूर्त्तिः | ४० | पञ्चवक्त्र पीठम् |
| ७ | आसनम् | ४१ | मंगला |
| ८ | श्मशानम् | ४२ | प्रकाशचक्रम् |
| ९ | क्षेत्रपालः | ४३ | करंकिणी |
| १० | भासाचक्रम् | ४४ | क्रोधनी |
| ११-१२ | पूजाप्रकारः | ४५ | ” |
| १३-१४ | पंचवाहचक्रम् | ४६ | भैरवी |
| १५ | वामा | ४७ | लेलिहाना |
| १६ | खेचरी | ४८ | खेचरी |
| १७ | भूचरी | ४९ | मध्यमार्गः |
| १८ | दिक्चरी | ५० | वृन्दचक्रम् |
| १९ | गोचरी | ५१ | मन्त्रशक्तियुगलम् |
| २० | कलौघः | ५२ | वृन्दचक्रम् |
| २१ | कुण्डलीत्रितयम् | ५३ | मंगला |
| २२ | महाशून्यम् | ५४ | ज्ञानदीधितिः |
| २३ | शिवमूर्त्तिः | | रौद्रदीधितिः |
| २४-२५ | पंक्तिः | | योगदीधितिः |
| २६ | दण्डमुण्डक्रमः | | मन्त्रदीधितिः |
| २७-२८ | क्रमः पंचवाहः | ५५ | मंगला |
| २९ | दिव्यौघः | ५६ | ” |
| ३० | खेचरी | ५७ | भा तनुः |
| ३१ | भूचरी | ५८ | देवीमूर्त्तिः |
| ३२ | दिक्चेरी | ५९ | मन्त्रः |
| ३३ | गोचरी | ६०, ६१ | संघट्टमुद्रा |
| ३४ | पंचवृत्तयः | ६२, ६३ | शून्यपदं (शिवरूपम्) |
| ३५ | गुर्वौघः | ६४, ६५ | सृष्टिः |
| ३६ | आनन्दचक्रम् | ६६ | पंचचक्रम |

| श्लोकाङ्क | विषयः | श्लोकाङ्क | विषयः |
|---|---|---|---|
| ६७ | अन्तचक्रम् | ८२-८९ | पंचनाथाः |
| ६८, ६९, ७० | पातः | ९०-९५ | खण्डचक्रक्रमः |
| ७१ | परं व्योमः | ९६, ९७, ९८ | पूर्णप्रथा |
| ७२ | पंचधा चक्रम् | ९९, १००, १०१ | क्रमः |
| ७३ | वृन्दचक्रव्याप्तिः | १०१ | सृष्टिकाली |
| ७४ | नादः | १०२ | द्वैधक्रमः |
| ७५ | पञ्चप्रणवः | १०३ | अक्रमक्रमः |
| ७६ | सृष्टिः | १०४ | व्योम |
| ७७, ७८, ७९, ८०, ८१ | पंचयोनयः | १०५ | भेदशूलम् |

चतुर्थे तु विमर्शे श्लोकाः १३४ सन्ति, तेषु च

| | | | |
|---|---|---|---|
| १ | अणुत्वम् | ५०, ५१ | काली |
| २ | षड्ध्ववर्णना | ५२ | सुकाली (साधुकाली) |
| ३ | अर्चना | ५३, ५४ | यमकाली |
| ४ | मध्यवाहः | ५५, ५६ | मृत्युकाली |
| ५ | परंव्योम | ५७ ६१ | काली |
| ६ | चंडिका | ६२-६४ | मार्त्तण्डकाली |
| ७ | पूजाद्रव्यम् | ६५ | यमकाली |
| ८, ९, १०, ११ | पूजारहस्यम् | ६६, ६७ | काली |
| १२-१३ | विमर्शस्वरूपम | ६८ | महाकालकाली |
| २४ | श्रुतिप्रमाणम् | ६९, ७० | काली |
| २५-२७ | चिद्गगनम् | ७१ | भीमकाली |
| २८ | प्रत्यभिज्ञा | ७२-७३ | काली |
| २९-३४ | चिद्गगनम् | ७४ | नादः |
| ३५ | देवीरूपम् ( स्थूलम् ) | ७५ | काली |
| ३६ | मन्त्रः | ७६ | सुधासिन्धुः |
| ३७ | शक्तिः | ७७ | सम्वित्पद्मम् |
| ३८-४४ | काली | ७८ | मायाकर्णिका |
| ४५ | सृष्टिकाली | ७९ | प्रकृतिमयपत्त्रम् |
| ४६ | स्थितिकाली | ८० | पीठम् |
| ४७, ४८ | काली | ८१ | प्रेतासेनम् |
| ४९ | संहारकाली | ८२ | काली |

एवं पर्यालोचनेन परिदृश्यते यत् उपासकैर्ज्ञेयतमानि तत्त्वानि बहूनि प्रतिविमर्शमस्मिन् स्तोत्रे उद्घाटितानि। तानि यथा—पंचवाहः, द्वादशशक्तिवृन्दम्, खेचर्यादिचतुष्टयम्, षट्राजपुत्रः, गुरुक्रमः, पूजनीयाया भगवत्याः कालिकायाः सृष्टिकाली इत्यादिकानि अनेकानि गुह्यरूपाणि गौडे केरले चाप्रसिद्धानि पूजाक्रमः षडध्वविषयः भावना, तस्याः फलम् फलदाने हेतुः, मन्त्रः तद्गता शक्तिश्चेति।

एवमेव उपासनोपयोगि-चार-राव-चरुमुद्रादिकानां रहस्यज्ञेयं वास्तवस्वरूपम् अत्यन्तमुपादेयतयाऽऽवश्यकमिति मत्वा वर्णितम्। ग्रन्थान्तगतदशासु श्लोकेषु अस्याः स्तुतेर्मूलं हेतुः कर्त्ता ग्रन्थमानं चापि स्वशब्देनैव निर्दिष्टम्।

अस्यां स्तुतौ विभागदर्शने विमर्शशब्द उपयुक्तः। स च शब्दः काश्मीर-शैवपद्धति-सम्प्रदाये बहुशः समुपयुक्तः।

### ग्रन्थगत-सम्प्रदायः

अस्मिन् ग्रन्थे भगवत्याः कालिकायास्तन्त्रसारादिषु प्रामाणिकनिबन्धेषु परिदृश्यमानानां गुह्यकाली हंसकाली श्मशानकाली दक्षिणाकाली कामकलाकालीत्यादिरूपाणां वर्णनं लेशेनापि न विद्यते। परंतु सृष्टिकाली स्थितिकाली संहारकाली रक्तकाली यमकाली मृत्युकाली मार्तण्डकाली चंडोग्रकाली कालसंकर्षणीकालीत्यादि-

नामभिः प्रसिद्धानां तन्त्रसारे तन्त्रालोके च परिदृश्यमाणानां कालीभेदानां वर्णनमस्ति। अतो ज्ञायते यदयं ग्रन्थः काश्मीर-त्रिक-सम्प्रदायानुगत एव। यच्चापि कालसंकर्षिणी-कालिकाया नाम रूपं मन्त्रश्च चिदम्बरतन्त्रे अनुत्तराम्नायप्रकरणे परिपठितं परिदृश्यते। परं तदेकं प्रमाणं नालम्। यतः अन्यानि तत्सहचारीणि नामानि तस्मिन् न दृश्यन्ते। अत एतत् स्पष्टं यत् या परतत्त्वोपासना कालीरूपेण क्रियमाणा श्रीमदभिनवगुप्तनाथपादेन तन्त्रालोके तन्त्रसारे च ईषत् प्रकटीकृता सरहस्यं सेयमिति प्रत्याभिज्ञायते। कालिदासोऽभिनवगुप्तात् पूर्वं संबभूवेति सत्यम्। तथापि अभिनवगुप्तस्य कालिदासस्य च उभयोर्गुरुपरम्परा समानस्रोतोद्भवा आसीदेवेति हि तन्त्रालोकगत--प्रथम--चतुर्थाह्निक--प्रपठितवचनानि एतद्विषयकानि परिशीलनेन स्पष्टमवगम्यते।

पारिभाषिकशब्दानां गूढार्थविवरणम्।

यत् किंचिदपि शास्त्रमारिरचयिषुः स्वमनसि स्थितानर्थान् संप्रकाशयितुं कतिचिच्छब्दा धात्वर्थं मनसि निधायैव प्रत्ययादिना साधयति। तेषां पारिभाषिकशब्दानामर्थं शिष्यपरम्परया व्याख्यानतः विशेषप्रतिपत्तिन्यायेन निःसन्दिग्धं ज्ञातुं शक्यते। परम्परा-विच्छिन्नत्वात् सम्प्रदायो विच्छिन्नो भवतीति त एव शब्दा गूढार्थत्वं विजहतो रूढशब्दा दुर्बोधाश्च भवन्ति। ततश्च शिष्यावबोधकारणाय प्रणीतो ग्रन्थो दुर्बोधतापदवीमवगाह्य बहूनामनादरणीयो दुर्ज्ञेयत्वादेव भवति अनुपकारकश्चापि भवति। तेषां ग्रन्थानां प्रति जनतायाः पुनः पुनरपि समादरं संजनयितुं गूढार्थशब्दान् विवृत्य केचन महान्तः स्वस्व-भावमनुसृत्य बहूपकुर्वन्ति। ज्ञानं तु अर्थसाधनमेव हि। अतस्तज्ज्ञानं पदार्थज्ञानाधीनं मत्वैवास्मिन् ग्रन्थे टीकाया अभावात् भक्तानां मनसि गूढार्थं सम्यगाविर्भावयितुं कतिचित् पारिभाषिकशब्दानामुपासनामार्गे प्रधानस्तम्भभूतानां संक्षिप्तं विवरणमाप्तोक्त्यनुसारेण क्रियते।

अस्मिन् ग्रन्थे भगवत्याः कालिकाया उपासनारहस्यं स्तुतिमुखतो गुम्फितम्। तथाच तदुपासनायाः साफल्यं सम्यगिच्छता साधकेन यद् यज्ज्ञातव्यमावश्यकीनं तत् तत् सकलमपि पारिभाषिकैर्गूढार्थशब्दैर्दर्शितम्।

आपाततः कालिकाशब्दार्थं विमृश्यमाणानां साधकानां मनसि प्रतीयात् यत्, इयमुपासना स्त्रीरूपिण्याः कस्याश्चिद्देवताया इति। परन्तु सम्यगवधाय स्तोत्रमिदं पठतां मनसि प्रतिभायात् एव अत्र वर्णितोपासना परतत्त्वस्यैव। यत् किल औपनिषदः परं ब्रह्मेत्याचक्षते। अत्रैवोक्तम्—

"न त्वमम्ब पुरुषश्च नाङ्गना
चित्स्वरूपिणि न षण्ढतापि ते।

नापि भर्त्तुरपि ते त्रिरूपता
त्वां विना त्वदपि न स्फुरेत्तूथम् ।।"

एतत्समानार्थिका श्रुतिरपि श्वेताश्वतरोपनिषदि वर्तते ।

"त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी ।
त्वं जीर्णो दण्डेन वञ्चयसि त्वं जातो भवसि विश्वतोमुखः ।।"

यथेयमुपासना परतत्त्वस्य स्त्रीरूपेण क्रियमाणा आगमेषु दृश्यते, एवमेव पुरुष-रूपेणापि क्रियमाणा कालशब्देनोपवर्णिता दृश्यते । अथर्ववेदे कालसूक्ते च—

एवमेव श्रीमद्भगवद्गीतायामपि—"कालोऽस्मि लोकक्षयकृत् प्रवृद्ध" इत्यादिना सन्दर्भेण प्रत्यभिज्ञापितः कालशब्दस्य गूढार्थः परतत्वमिति । शनैः शनैर्हि स भावोऽस्पष्टतामाप्तः स्थूलकालरूपेण च व्यवह्रियमाणो दृश्यते सांख्यकारिकायां कालकारणिक इति पदेन ।

यद्रहस्यं कालशब्देन संसूच्यते वेदमन्त्रेषु पुरुषरूपेण तदेव रहस्यमागमग्रन्थेषु स्त्रीरूपेण कालीति पदेन परतत्वमित्युपवर्णितम् ।

वेदमन्त्रेषु परतत्वं परंब्रह्म परमात्मा पुरुष इत्यादिभिः पदैः समुपास्यते सर्व-रूपेण । यतः सर्वाण्यपि रूपाणि परतत्वस्यैवाधिष्ठानसत्तयोद्भूयन्ते स्थीयन्ते लीयन्ते च । सर्वैः रूपैरेतत् परतत्त्वमोतं प्रोतं च ।

कालीशब्दस्तु कालशब्दादेव निष्पन्नः ।
कालशब्दस्तु कलधातोः समुत्पन्नः ।
कल शब्द संख्यानयोः ( भ्वादौ )
कल क्षेपे ( चुरादौ )
कल गतौ संख्याने च ( चुरादौ )

तन्त्रसारे च कलधात्वर्थाः—गति क्षेपो ज्ञानं गणनं भोगीकरणं शब्दनं स्वात्म-लयीकरणं चेत्युक्ताः । तन्त्रालोके चापि—

"किं चात्र कलनमुच्यते ? इत्याशंक्याह—
क्षेपो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात् ।। १७३ ।।
स्वात्मनो भेदनं क्षेपो भेदितस्याविकल्पनम् ।
ज्ञानं विकल्पः संख्यानमन्यतो व्यतिभेदनात् ।। १७४ ।।
गतिः स्वरूपारोहित्वं प्रतिबिम्बवदेव यत् ।
नादः स्वात्मपरामर्श-शेषता तद्विलोपनात् ।। १७५ ।।

'कल किल बिल क्षेपे' 'कल गतौ' 'कलसंख्याने' 'कल शब्दे' इति धातुचतुष्टयस्य पंचधायमर्थो यद् गतिर्ज्ञाने प्राप्तौ च वर्तते इति, एतदेव क्रमेण व्याचष्टे—क्रमादित्यादिना, भेदनमिति वहिरुल्लासनम, अविकल्पनमिति स्वात्माभेदेन परामर्शः । भेदित-

स्यैव प्रमातृप्रमेयादेरर्थस्य परस्परापोहनात् इदमिदं नानिदमिति प्रतिनियततयावस्थापनात् संख्यानं विकल्पः, गतिश्चात्र गत्युपसर्जना प्राप्तिस्तेन भेदितोऽर्थः—सम्विल्लक्षणं स्वरूपमारोहति प्राप्नोतीति स्वरूपारोही, तस्य भावस्तत्त्वम्, न चैतत् कट इव देवदत्तस्येत्युक्तं—प्रतिबिम्बवत् इति प्रतिबिम्बस्य हि तदव्यतिरिक्तत्वेऽपि तद्व्यतिरिक्ततयैवावभासो भवेदिति भावः, स्वात्मपरामर्शशेषतेति नदनमात्ररूपत्वात्, तद्विलोपनादिति—तेषामविकल्पज्ञानादीनां विलोपनात्, अपहस्तनादित्यर्थ, एतद्धि भिन्नस्यैव भवेदिति भाव ॥ १७४।१७५ ॥ एतदेव प्रकृते विश्रमयति ।

"इति पञ्चविधामेनां कल्पनां कुर्वती परा। देवी काली तथा कालकर्षिणी चेति कथ्यते ॥ १७६ परा देव्या एवैतदर्थानुगमादेवं व्यपदेशः, इत्याशयः १७६ ॥"

ततः कालीशब्दपर्य्यायस्तन्त्रसारे उक्तो यथा —"तत्र परमेश्वरः पूर्णसंवित्स्वभावः, पूर्णतैवास्य शक्तिः कुलं सामर्थ्यं ऊर्मिः हृदयं सारं स्पन्दः विभूतिः त्रीशिका काली कर्षणी चण्डी वाणी भोगो दृक् नित्या इत्यादिभिरागमभाषाभिस्तत्तदन्वर्थप्रवृत्ताभिरभिधीयते तेन तेन रूपेण ध्यायिनां हृदि आस्ताम् इति।" "सा भगवती श्रीपरैव श्रीमन्मातृसद्भावकालकर्षिण्यादिशब्दान्तरनिरुक्ता।"

श्रीभूतिराजगुरवोऽपि "क्षेपाज्ज्ञानाच्च काली कलनवशतया" इत्याहुः ।

एवं प्रकृतिप्रत्ययविभागज्ञानानन्तरं शब्दार्थनिरुक्त्यनुसारेण विचार्य्यमाने भगवत्याः कालिकायाः परं स्वरूपं साक्षात् परं ब्रह्म वा परं शिवतत्त्वं वा पराशक्तिरूपं वेति सम्यगवगन्तुं शक्यम् ।

उपासकः स्वरुचिमनुसृत्य च उपास्यं तदनुसारि-नामरूपक्रियायुक्तं स्वेष्टं ध्यात्वैवोपासते। उपासकस्य रुचिस्तु पूर्वकर्मानुसारेण पूर्वजन्मकृतोपासनानुसारेण च इह जन्मनि समासादितगुणकर्मण्यनुसृत्य च जायते। तयोर्वैचित्र्यात् रुचेरपि वैचित्र्यम्। तत एकस्यैव परतत्त्वस्य अनेकानि स्वगुणानि रूपाणि उपासकाभीष्टगुणधर्मादीनां ध्येये चारोपणात् भक्तानुग्रहकारे सम्यगाविर्भवन्तीति उपासनामार्गीयशास्त्रेषु बहुशः समुपदिष्टम् ।

एवमेव भगवत्याः कालिकायाः १२, १३, १६, १७ वा मुख्यानां रूपाणां वर्णनमागमशास्त्रेषु दृष्टम्।' तद्गतानि यानि यानि रूपाणि काश्मीरसम्प्रदायेषु प्रसिद्धानि येषां च केवलं नाममात्रेण सूचनमस्मिन् ग्रन्थे कृतं तेषां नामानि रूपाणि च ध्यानार्थं निर्दिष्टानि अत्र तन्त्रालोकादुद्धृत्य उल्लिख्यन्तेऽवगत्यर्थम्। द्वादशभेदा यथा तन्त्रालोके—

"यदुक्तं श्रीसार्द्धशतिके—

द्वादशारं महाचक्रं रश्मिरूपं प्रकीर्तितम्।
नाम चैव प्रवक्ष्यामि रश्मीनां तु यदास्थितम् ॥

सृष्टिः स्थितिश्च संहारो रक्तकाली तथैवचे ।
स्वकाली यमकाली च मृत्युकाली तथैव च ॥
रुद्रश्च परमार्कश्च मार्तण्डश्च ततः परः ।
कालाग्निरुद्रकाली च महाकाल्यभिधा पुनः ॥"

अस्मिन्नुक्तानि नामानि यथा—१ सृष्टिकाली, २ स्थितिकाली, ३ संहारकाली, ४ रक्तकाली, ५ स्वकाली, ( सुकालीति वा ) ६ यमकाली, ७ मृत्युकाली, ८ रुद्रकाली, ( भद्रकाली ), ९ परमार्ककाली, १० मार्तण्डकाली, ११ कालाग्निरुद्रकाली, १२ महाकाली ( पराकाली, महाकालकाली, कालकाली, कालीति वा )। त्रयोदशभेदा यथा—सार्द्धशतिकागतं "द्वादशारमित्यारभ्य" "पुन" रित्यन्तं वचनं समुल्लिख्य तदन्ते—

"महाभैरवशब्दश्च घोरशब्दस्ततः परः ।
चण्डकाली पदं चान्ते त्रयोदश उदाहृताः ॥"

अत्र त्रयोदशी 'महाभैरवघोरचण्डकाली' इति उक्ता ।

तन्त्रालोकोद्धृत-श्रीतन्त्रराजभट्टारकेऽपि—

सृष्टिकाली च संहारे सृष्टौ सा परमेश्वरी ।
स्थितिकाली तथा घोरा ततः संहारकालिका ॥
रक्तकाली चर्वयन्ती रक्तौघमविभेदतः ।
सुकाली यमकाली च मृत्युकाली भयावहा ॥
भद्रकाली तथा चान्या परमादित्यकालिका ।
मार्तण्डकाली कालाग्निरुद्रकालमहोल्वणा ॥
महाकालकुले काली महाभैरवकालिका ।
त्रयोदशविधा काली विज्ञेया नामभेदतः ॥

अथ षोड़शभेदाः । तदुक्तं तन्त्रालोके—

ये चक्षुर्मण्डले श्वेते प्रत्यक्षे परमेश्वरि ।
षोड़शारं द्वादशारं तत्रस्थं चक्रमुत्तमम् ॥ १२७

ये इति द्विवचनं गोलोकद्वयापेक्षया, एवमुत्तरत्रापि ज्ञेयम्, ये श्वेते चक्षुर्मण्डले दृश्येते दृश्यमाने नतु रक्तमण्डलवद्गुप्ते तत्र विश्वक्रोडीकारादुत्तमं प्रमेयप्रमाणप्रमातृ-प्रमाणां सर्वात्मकत्वात् षोड़शारं चक्रं तिष्ठति तद्रूपतया प्रस्फुरतीत्यर्थः, यदभिप्रायेणैव श्रीक्रमसद्भावभट्टारके "अनाख्यचक्रे षोड़शैव देव्यः पूज्यत्वेनोक्ताः" यदुक्तं तत्र इत्यन्तम् ।

एवमेव सप्तदशभेदा अपि तन्त्रालोके—

"यदुक्तं श्रीपंचशतिके

'दशसप्तविसर्गस्था महाभैरव भीषणा ।

संहरेद् भैरवान् सर्वान् विश्वं च सुरपूजित ।।
सान्तः शाम्यति यस्यां च सा स्याद् भरितभैरवी ।
महाभैरवचण्डोग्रघोरकालीपरा च सा ।।' इति ।"

श्रीक्रमसद्भावभट्टारके अनाख्यचक्रे सप्तदशदेव्यः पूज्यत्वेनोक्ताः, यदुक्तं तत्र

कालोत्थिता महादेव सानन्दा नन्दिनी शिवा ।
चिद्घना युग्ममध्यस्था अक्षरा क्षरगोचरा ।।
अकुला कलयेन्नित्या कालकाली निराकुला ।
सा कला लीयते यस्यां सृष्टिकालीति सा स्मृता ।।

इत्याद्युपक्रम्य—

क्रमत्रयाणां यच्चक्रं घोरघोरतरं महत् ।
कालरूपं मरीच्याद्यं त्वाष्ट्रं कल्पान्तकान्तगम् ।।
आचरेत्तु महाचारं चातुर्थ्येणैव तत्र च ।
या कला घोरघोराग्रा तस्याः सा तुर्यगा शिवा ।।
महाभैरवघोरस्य चण्डरूपस्य सर्वतः ।
ग्रसते या महाकाली द्व्यष्टका कालनाशिनी ।।
सप्तादशी तु सा काली विद्धि सर्वार्थकारिणी ।' इति"

उपरि निर्दिष्टानां षोड़श सप्तदश वा भेदानां केवलं सूचनायैव दृश्यते, न नामानि रूपाणि च तासाम् । त्रयोदशभेदानां तु रूपवर्णनापि ध्याननिर्देशद्वारा श्रीक्रमस्तुतौ कृतस्तन्त्रालोके चोद्धृतः, अत्र सम्यगवबोधार्थं विलिख्यते ।

श्रीक्रमस्तोत्रेऽपि—

"कौलार्णवानन्दघनोर्मिरूपामुन्मेषमेषोभयभाजमन्तः ।
निलीयते नीलकुलालये या तां सृष्टिकालीं सततं नमामि ।।"

श्रीपंचशतिकादावपि—

"मन्त्रोदया व्योमरूपा व्योमस्था व्योमवर्जिता ।
सर्वा सर्वविनिर्मुक्ता विश्वस्मिन् सृष्टिनाशिनी ॥
या कला विश्वविभवा सृष्ट्यर्थकरणक्षमा ।
यदन्तः शान्तिमायाति सृष्टिकालीति सा स्मृता ।।"

श्रीक्रमस्तोत्रेऽपि—

"महाविनोदार्पितमातृचक्र—
वीरेन्द्रकासृग्रसपानसक्ताम् ।
रक्तीकृतां च प्रलयात्यये तां
नमामि विश्वाकृतिरक्तकालीम् ।।"

श्रीपञ्चशतिके च—

"न चैषा चक्षुषा ग्राह्या न च सर्वेन्द्रियस्थिता ।
निर्गुणा निरहङ्कारा रञ्जयेद्विश्वमण्डलम् ॥
सा कला तु यदुत्पन्ना सा ज्ञेया रक्तकालिका ।"

श्रीक्रमस्तुतौ—

"वाजिद्वयस्वीकृतवातचक्र—
प्रकान्तसंघट्टगमागमस्थाम् ।
शुचिर्ययास्तं गमितोऽर्चिषा तां
शान्तां नमामि स्थितिनाशकालीम् ॥"

श्रीपञ्चशतिकेऽपि—

"हासिनी पौद्गली येयं बालाग्रशतकल्पना ।
कल्पते सर्वदेहस्था स्थितिः सर्गस्य कारिणी ॥
यदुत्पन्ना तु सा देवी पुनस्तत्रैव लीयते ।
तां विद्धि देवदेवेश स्थितिकालीं महेश्वर ॥"

श्रीक्रमस्तोत्रे—

"सर्वार्थसंकर्षणसंयमस्य
यमस्य यन्तुर्जगतो यमाय ।
वपुर्महाग्रासविलासरागात्
संकर्षयन्तीं प्रणमामि कालीम् ॥"

श्रीपंचशतिके च—

"यमरूपस्वरूपस्था रूपातीतस्वरूपगा ।
सा कला लीयते यस्यां यमकाली तु सा स्मृता ॥"

श्रीक्रमस्तोत्रे—

"उन्मन्यनन्ता निखिलार्थगर्भा
या भावसंहार निमेषमेति ।
सदोदिता सत्युदयाय शून्यां
संहारकालीं मुदितां नमामि ॥"
"ममेत्यहङ्कारकलाकलाप—
विस्फारहर्षोद्धत गर्वमृत्युः
ग्रस्तो यया घस्मरसंविदं तां
नमाम्यकालोदितमृत्युकालीम् ॥"

श्रीपंचशतिके च—

चण्डकाली शुद्धवर्णा यामृवप्रसनोद्यता ।
भावाभावविनिर्मुक्ता विश्वसंहाररूपिणी ॥
तत्र सा याति विलयं सा च संहारकालिका ।'
"ओमित्येषा कुलेशानी मृत्युकालान्तपातिनी ।
मृत्युकालकला यस्याः प्रविशेद्विग्रहं शिव ॥
तदा सा मृत्युकालीति ज्ञेया गिरिसुताधव ।'

श्रीक्रमस्तोत्रे—

"विश्वं महाकल्पविरामकल्प—
भवान्तभीमभ्रुकुटिभ्रमन्त्या ।
याश्नात्यनन्तप्रभवार्चिषा तां
नमामि भद्रां शुभभद्रकालीम् ॥"

श्रीक्रमसद्भावभट्टारके च—

"इदं सर्वमसर्वं यत्संहारान्तं तु नित्यशः ।
कुटिलेक्षणरेखान्तग्रस्तमस्तमितं च यत् ॥
ततो बोधरसाविष्टा स्पन्दमाना निराकुला ।
दीधितीनां सहस्रं यद्वमेच्च पिबते भृशम् ॥
सा कला लीयते यस्यां रुद्रकालीति सा स्मृता ।"

श्रीपंचशतिकादावपि—

गमागमसुगम्यस्था महाबोधावलोकिनी ।
मायामलविनिर्मुक्ता विज्ञानामृतनन्दिनी ॥
सर्वलोकस्य कल्याणी रुद्रा रुद्रसुखप्रदा ।
यत्रैव शाम्यति कला रुद्रकालीति सा स्मृता ॥
भेदस्य द्रावणाद्रुद्रा भद्रसिद्धिकरीति या ।"

श्रीक्रमस्तोत्रे—

"मार्तण्डमापीतपतङ्गचक्रं
पतङ्गवत्कालकलेन्धनाय ।
करोति या विश्वरसान्तकां तां
मार्तण्डकालीं सततं प्रणौमि ॥"

श्रीपंचशतिके च—

"शब्दब्रह्मपदातीता षट्त्रिंशान्तनवान्तगा ।
ब्रह्माण्डखण्डादुत्तीर्णा मार्तण्डी मूर्तिरव्यया ॥
सा कला लीयते यस्यां मार्तण्डी कालिकोच्यते ।"

श्रीक्रमस्तोत्रे—

"अस्तोदितद्वादशभानुभाजि
यस्यां गता भर्गशिखा शिखेव ।
प्रशान्तधाम्नि द्युतिनाशमेति
तां नौम्यनन्तां परमार्ककालीम् ॥"

श्रीपंचशतिके च—

एकाकिनी चैकवीरा सुसूक्ष्मा सूक्ष्मवर्जिता ।
परमात्मपदावस्था परापरस्वरूपिनी ॥
सा कला पररूपेण यत्र संलीयते शिव ।
सा कला परमार्केति ज्ञेया भस्माङ्गभूषण ॥"

श्रीक्रमस्तोत्रे—

"कालक्रमाक्रान्तदिनेशचक्र—
क्रोडीकृतान्ताग्निकलाप उग्रः ।
कालाग्निरुद्रो लयमेति यस्यां
तां नौमि कालानलरुद्रकालीम् ॥"

श्रीपंचशतिकादौ च—

"वरदा विश्वरूपा च गुणातीता परा कला ।
अघोषा सास्वराराावा कालाग्निग्रसनोद्यता ॥
निरामया निराकारा यस्यां सा शाम्यति स्फुटम् ।
कालाग्निरुद्रकालीति सा ज्ञेयामरवन्दित ॥"

श्रीक्रमस्तुतौ—

"या सा जगद्ध्वंसयते समग्रं
मृत्योर्वपुर्ग्रासयतीति विष्वक् ।
धामाग्निरूपीयसहस्रदीप्तां
तां नौमि कालानलरुद्रकालीम् ॥"

श्रीक्रमस्तोत्रे—

"नक्तं महाभूतलये श्मशाने
दिक्खेचरीचक्रगणेन साकम् ।
कालीं महाकालमलं ग्रसन्तीं
वन्दे ह्यचिन्त्यामनिलानलाभाम् ॥"

श्रीपंचशतिके च—

"ऋतोज्ज्वला महादीप्ता सूर्यकोटिसमप्रभा ।

कलाकलङ्करहिता कालस्य कलनोद्यता ॥
यत्र सा लयमाप्नोति कालकालीति सा स्मृता ।'

श्रीक्रमस्तोत्रे—

"क्रमत्रयत्वाष्ट्रमरीचिचक्र—
संचारचातुर्यतुरीयसत्ताम् ।
वन्दे महाभैरवघोरचण्ड—
कालीं कलाकाशशशाङ्ककान्तिम् ॥"

श्रीपंचशतिके च—

"दशसप्तविसर्गस्था महाभैरवभीषणा ।
संहरेन्भैरवान् सर्वान् विश्वं च सुरपूजित ॥
सान्तः शाम्यति यस्यां च सा स्याद्भरितभैरवी ।
महाभैरवचण्डोग्रघोरकाली परा च सा ॥"

श्रीपंचशतिके—

"डकला भीषणा रौद्रा कुलकालिनिराकुला ।
अलक्ष्या लक्ष्यनिर्लक्ष्या सुकाली नाम सिद्धिदा ॥"
"श्रीमत्सदाशिवपदेऽपि महोग्रकाली
भीमोत्कटभ्रुकुटिरेष्यति भङ्गभूमिः ।
इत्याकलय्य परमां स्थितिमेत्य काल—
संकर्षिणीं भगवतीं हठतोऽधितिष्ठेत् ॥"

एवं चतुर्दश कालिकानां ध्यानानि उपलब्धानि शेषाणां तिसृणां नोपलब्धानि । एतासां रूपाणामाध्यात्मिकं रहस्यमपि तन्त्रालोके सुवर्णितम्—

अत्र तात्पर्यतः प्रोक्त—
मन्ते क्रमचतुष्टयम् ।
एकैकत्र यतस्तेन
द्वादशात्मकतोदिता ॥ १४५
न व्याख्यातन्तु निर्भज्य
यतोऽति सरहस्यकम् ।
मेयेऽपि देवी तिष्ठन्ती
मासराश्यादिरूपिणी ॥ १४६
अत एषा स्थिता संवि-
दन्तर्बाह्योभयात्मना ।
स्वयं निर्भास्य तत्रान्यद्
भासयन्तीव भासते ॥ १४७

ततश्च प्रागियं शुद्धा तथा भासनसोत्सुका ।
सृष्टिं कलयते देवी तन्नाम्नागम उच्यते ॥ १४८
तथा भासितवस्त्वंशरञ्जनां सा बहिर्मुखी ।
स्ववृत्तिचक्रेण समं ततोऽपि कलयन्त्यलम् ॥ १४९
स्थितिरेषैव भावस्य तामन्तर्मुखतारसात् ।
संजिहीर्षुः स्थितेर्नाशं कलयन्ती निरुच्यते ॥ १५०
ततोऽपि संहाररसे पूर्णे विघ्नकरीं स्वयम् ।
शङ्कां यमात्मिकां भागे सूते संहरतोऽपि च ॥ १५१
संहृत्य शङ्कां शङ्क्यार्थवर्जं वा भावमण्डले ।
संहृतिं कलयत्येव स्वात्मवह्नौ विलापनात् ॥ १५२
विलापनात्मिकां तां च भावसंहृतिमात्मनि ।
आमृशत्येव येनैषा मया ग्रस्तमिति स्फुरेत् ॥ १५३
संहार्योपाधिरेतस्याः स्वस्वभावो हि संविदः ।
निरुपाधिनि संशुद्धे संविद्रूपेऽस्तमीयते ॥ १५४
विलापितेऽपि भावौघे कंचिद्भावं तदैव सा ।
आश्यानयेद्य एवास्ते शङ्कां संस्काररूपकः ॥ १५५
शुभाशुभतया सोऽयं सोष्यते फलसंपदम् ।
पूर्वं हि भोगात् पश्चाद्वा शङ्केयं व्यवतिष्ठते ॥ १५६
अन्यदाश्यानितमपि तदैव द्रावयेदियम् ।
प्रायश्चित्तादिकर्मभ्यो ब्रह्महत्यादिकर्मवत् ॥ १५७
रोधनाद् द्रावणाद् रूपमित्थं कलयते चितिः ।
तदपि द्रावयेदेव तदप्याश्यानयेदथ ॥ १५८
इत्थं भोग्येऽपि संभुक्ते सति तत्करणान्यपि ।
संहरन्ती कलयते द्वादशैवाहमात्मनि ॥ १५९
कर्मबुद्ध्यक्षवर्गो हि बुद्ध्यन्तो द्वादशात्मकः ।
प्रकाशकत्वात् सूर्यात्मा भिन्ने वस्तूनि जृम्भते ॥ १६०
अहंकारस्तु करणमभिमानैकसाधनम् ।
अविच्छिन्नपरामर्शी लीयते तेन तत्र सः ॥ १६१
यथा हि खड्गपाशादेः करणस्य विभेदिनः ।
अभेदिनि स्वहस्तादौ लयस्तद्वदयं विधिः ॥ १६२
तेनेन्द्रियौघमार्तण्ड-मण्डलं कलयेत् स्वयम् ।
संविद्देवी स्वतन्त्रत्वात् कल्पितेऽहंकृतात्मनि ॥ १६३

स एव परमादित्यः पूर्णकलपञ्चयोदशः ।
करणत्वात् प्रयात्येव कर्तरि प्रलयं स्फुटम् ॥ १६४
कर्त्ता च द्विविधः प्रोक्तः कल्पिताकल्पितात्मकः ।
कल्पितो देहबुद्ध्यादि-व्यवच्छेदेन चर्चितः ॥ १६५
कालाग्निरुद्रसंज्ञास्य शास्त्रेषु परिभाषिता ।
कालो व्यवच्छित्तद्युक्तो वह्निर्भोक्ता यतः स्मृतः ॥ १६६
संसाराक्लृप्तिक्लृप्तिभ्यां रोधनाद् द्रावणात् प्रभुः ।
अनिवृत्तपशूभावस्तत्राहंकृत् प्रलीयते ॥ १६७
सोऽपि कल्पितवृत्तित्वाद्विश्वाभेदैकशालिनि ।
विकासिनि महाकाले लीयतेऽहमिदंमये ॥ १६८
एतस्यां स्वात्मसंवित्ताविदं सर्वमहं विभुः ।
इति प्रविकसद्रूपा संवित्तिरवभासते ॥ १६९
ततोऽन्तःस्थितसर्वात्मभावभोगोपरागिणी ।
परिपूर्णापि संवित्तिरकुले धाम्नि लीयते ॥ १७०
प्रमातृवर्गो मानौघः प्रभाश्च बहुधा स्थिताः ।
मेयौघ इति यत् सर्वमत्र चिन्मात्रमेव तत् ॥ १७१
इयतीं रूपवैचित्रीमाश्रयन्त्याः स्वसंविदः ।
स्वाच्छन्द्यमनपेक्षं यत् सा परा परमेश्वरी ॥ १७२
इमाः प्रागुक्तकलनास्तद्विजृम्भोच्यते यतः ।
क्षेपो ज्ञानं च संख्यानं गतिर्नाद इति क्रमात् ॥ १७३
स्वात्मनो भेदनं क्षेपो भेदितस्याविकल्पनम् ।
ज्ञानं विकल्पः संख्यानमन्यतो व्यतिभेदनात् ॥ १७४
गतिः स्वरूपारोहित्वं प्रतिबिम्बवदेव यत् ।
नादः स्वात्मपरामर्शशेषता तद्विलोपनात् ॥ १७५
इति पंचविधामेनां कलनां कुर्वती परा ।
देवी काली तथा कालकर्षिणी चेति कथ्यते ॥ १७६
मातृसद्भावसंज्ञास्यास्तेनोक्ता यत् प्रमातृषु ।
एतावदन्तर्संवित्तौ प्रमातृत्वं स्फुटीभवेत् ॥ १७७
वामेश्वरीतिशब्देन प्रोक्ता श्रीनिशिसंचरे ।
इत्थं द्वादशधा संवित् तिष्ठन्ती विश्वमातृषु ॥ १७८
एकैवेति न कोऽप्यस्याः क्रमस्य नियमः क्वचित् ।
क्रमाभावान्न युगपत्तद्भावात् क्रमोऽपि न ॥ १७९

क्रमाक्रमकथातीतं संवित्तत्त्वं सुनिर्मलम् ।
तदस्याः संविदो देव्या यत्र क्वापि प्रवर्तनम् ॥ १८०
तत्र तादात्म्ययोगेन पूजा पूर्णैव वर्तते ।
परामर्शस्वभावत्वादेतस्या यः स्वयं ध्वनिः ॥ १८१
सदोदितः स एवोक्तः परमं हृदयं महत् ।
हृदये स्वविमर्शोऽसौ द्रावितशेषविश्वकः ॥ १८२
भावग्रहादिपर्यन्तभावी सामान्यसंज्ञकः ।
स्पन्दः स कथ्यते शास्त्रे स्वात्मन्युच्छलनात्मकः ॥ १८३
किंचिच्चलनमेतावदनन्यस्फुरणं हि यत् ।
ऊर्मिरेषा विबोधाब्धेर्न संविदनया विना ॥ १८४
निस्तरङ्गतरङ्गादिवृत्तिरेव हि सिन्धुता ।
सारमेतत् समस्तस्य यच्चित्सारं जडं जगत् ॥ १८५
तदधीनप्रतिष्ठत्वात् संसारं हृदयं महत् ।

एतेषां श्लोकानां रहस्यं तन्त्रसारे सूत्ररूपेण उल्लिखितमस्ति । तद् यथा—

"ता एताः चतस्रः शक्तयः स्वातन्त्र्यात् प्रत्येकं त्रिधैव वर्तन्ते । सृष्टौ स्थितौ संहारे च इति द्वादश भवन्ति । तथाहि १ संवित् पूर्वम् अन्तरेव भावं कलयति, २ ततो बहिरपि स्फुटतया कलयति, ३ तत्रैव रक्तिमयतां गृहीत्वा ततस्तमेव भावम् अन्तरुपसंजिहीर्षया कलयति, ४ ततश्च तदुपसंहारविघ्नभूतां शङ्कां निर्मिणोति च ग्रसते च, ५ ग्रस्तशङ्कांशं भावभागम् आत्मनि उपसंहारेण कलयति, ६ तत उपसंहर्तृत्वं ममेदं रूपमित्यपि स्वभावमेव कलयति, ७ तत उपसंहर्तृस्वभावकलने कस्यचिद्भावस्य वासनात्मना अवस्थितिं कस्यचित्तु संविन्मात्रावशेषतां कलयति, ८ ततः स्वरूपकलनानान्तरीयकत्वेनैव करणचक्रं कलयति, ९ ततः करणेश्वरमपि कलयति, १० ततः कल्पितं मायीयं प्रमातृरूपमपि कलयति, ११ संकोचत्यागोन्मुखविकासग्रहणरसिकमपि प्रमातारं कलयति, १२ ततो विकसितमपि रूपं कलयति इति एता द्वादश भगवत्यः संविदः प्रमातृन् एकं वापि उद्दिश्य युगपत् क्रमेण द्विशः त्रिश इत्यादिस्थित्यापि उदयभागिन्यः चक्रवदावर्तमाना बहिरपि मासकला-राश्यादिक्रमेण अन्ततो वा घटपटादिक्रमेणाऽपि भासमानाः चक्रेश्वरस्य स्वातन्त्र्यं पुष्णत्यः श्रीकालीशब्दवाच्याः ।"

एतद्रहस्यमतिसंक्षेपेण महामाहेश्वरेण जयरथेण आगमवचनान्युदाहृत्य ज्ञापितम् ।

"एकं स्वरूपरूपं प्रसरस्थितिविलयभेदतस्त्रिविधम् ।
प्रत्येकमुदयसंस्थितिलयविश्रमतश्चतुर्विधं तदपि ॥

इति वसुपञ्चकसंख्यं विधाय सहजस्वरूपमात्मीयम् ।
विश्वविवर्तितावर्तप्रवर्तकं जयति ते रूपम् ॥

कालस्य कालि देहं विभज्य मुनिपंचसंख्यया भिन्नम् ।
स्वस्मिन् विराजमानं तद्रूपं कुर्वती जयसि ॥"

एवं पारिभाषिकाणि पदानि यानि चैतस्मिन् स्तोत्रे पठितानि तानि सर्वाणि श्लोकानुक्रमेण परिशिष्टे विवृतान्यस्माभिः ।

---

# अथ परिशिष्टम् ।

प्रथमश्लोके—गणेशः

तंत्रालोके (१) आः (६) श्लोके—

तद्देवताविभवभावि-महामरीचिचक्रेश्वरायित-निजस्थितिरेक एव ।
देवीसुतो गणपतिः स्फुरदिन्दुकान्तिः सम्यक् समुच्छलयतान्मम संविदब्धिम् ।

द्वितीयश्लोके—शिवतत्वम्

महार्थमञ्जरीपरीमले (१३) गाथायाम्—

तथा तथा दृश्यमानानां शक्तिसहस्राणामेकसंघट्टः ।
निजहृदयोद्यमरूपो भवति शिवो नाम परमस्वच्छन्दः ॥

षष्ठश्लोके—प्रकाशविमर्शौ

वरीवस्यारहस्ये :—

स जयति महाप्रकाशो यस्मिन् दृष्टे न दृश्यते किमपि ।
कथमिव तस्मिन् ज्ञाते सर्वं ज्ञातं किलोच्यते वेदे ॥३॥

तत्रैव च—

नैसर्गिकी स्फुरत्ता विमर्शरूपाऽस्य वर्त्तते शक्तिः ।
तद्योगादेव शिवो जगदुत्पादयति पाति संहरति ॥ ४ ॥

---

॥ श्रीरस्तु ॥

# चिद्गगनचन्द्रिका



## आदि-विमर्शः ।

क्षीरोदं पौर्णमासी शशधर इव यः प्रस्फुरन्निस्तरङ्गं
चिद्व्योमस्फारनादं रुचिविसरलसद्बिन्दुवक्त्रोर्मिमालम् ।
आद्यस्पन्दस्वरूपः प्रथयति सकृदोङ्कारशुण्डः क्रियादृग्-
दन्त्यास्योऽयं हठाद्यः शमयतु दुरितं शक्तिजन्मा गणेशः ॥१॥

स्थूलं सूक्ष्मं परं च त्रिविधमिह जगद् यत्प्रथावेशसिद्धा
युक्तं सत्ता यदीया स्फुरति च परतः स्वप्रथैकस्वभावा[1] ।
भामूर्तिं यं विमर्शक्रियमनुपतिता लक्ष्यते लोकवृत्तिः
सन्मार्गालोकनाय व्यपनयतु स वस्तामसीं[2] वृत्तिमीशः ॥२॥

इह कालिदासचन्द्रप्रसूतिरानन्दिनी स्तुतिर्व्याजात् ।
चिद्गगनचन्द्रिकाब्धेः शमयतु संसारदावदवथुं वः[3] ॥ ३ ॥

चिल्लोचनेन[4] सततं शिवमीक्षितुमन्वये च सद्भावम् ।
लब्धुं च पूर्णभावं यदि चेतः समुपाध्वमिमाम्[5] ॥ ४ ॥

हृद्गुहामभिलषन्नहन्तया
दृक्क्रियावपुरदृक्क्रियापदम् ।
सन्तमेमि[6] समभावदं[7] शिवं
सख्यहानिरमुना हि सूयते ॥ ५ ॥

---

१ प्रथादेशसिद्धौ २ नस्तां ३ नः ४ त्वल्लोच ५ पाद्यमि ६ सन्तनोमि ७ दङ्गिनं

याहमित्युदितवाक् परा च सा
यः प्रकाशलुलितात्मविग्रहः ।
यौ मिथः समुदिताविहोन्मुखौ
तौ षडध्वपितरौ श्रये शिवौ ॥ ६ ॥

शक्तिनेत्रपरिणद्धमास्थितं[1]
पूर्णभाम[2]यपयोधिमन्थताम्[3] ।
देवि तर्पणसुधाकलाश्रयं
रुद्रमन्दरमहं स्फुटं भजे ॥ ७ ॥

योऽभवद् भवति यस्तथेतरो
यो भविष्यति पृथक्क्रियो[4] जनः ।
तत्र यो धरमहन्तथैकया
सन्तमस्मि हृदिरन्ध्रमानतः ॥ ८ ॥

विश्वसद्मनि सदात्मनीश्वरे
पूरणात् पुरुषतामुपेयुषि[5] ।
ये मनः प्रणिदधुर्महर्षय-
स्तान् पतञ्जलिमुखानुपास्महे ॥ ९ ॥

खेचरीमुखमरीचिजालकं
व्योमशक्तितनुसंश्रयं[6] सदा ।
शंभुदत्ततनुजावभासया[7]
यत्र विश्वमनुकर्तुमीहते ॥ १० ॥

---

१ णद्धमा २ भावम ३ थन ४ क्रमो ५ मुपेयुषे ६ श्रये ७ भासना ।

खण्डसत्प्रसरगर्भया यया
लक्षितं स्फुरविपूर्णसत्तया ।
तत्त्वमैश्वरमखण्डमम्बिकां
त्वां प्रणौम्यखिलतत्त्वनायिकाम् ॥ ११ ॥

यः किलास स किलास ईश्वरः
ख्यातसत्वलुलितोर्ध्व[1] मूर्धनि ।
प्रत्यसौ[2] जननि यत्र तिष्ठति
त्वं स सत्व[3] वपुरद्रिरस्य[4] यः ॥ १२ ॥

कल्पनातिगमतीन्द्रियं च यल्-
लक्ष्यमुज्झति बहिर्मुखं तथा[5] ।
अन्तरालगमभावभावयो-
स्तन्नतोऽस्मि सदहं निराकृतिम्[6] ॥ १३ ॥

अम्ब यद् भवति तत्तदात्मना
स्वैरितामजहदद्वयोदयम् ।
तावकं पदमुपाकृतक्रमं[7]
ब्रह्म तत्सदिति वा[8] श्रुतं भजे ॥ १४ ॥

देशकालकलना विशेषतो
यद् भवानि विहितं निगद्यते[9] ।
व्यक्तिजातितनुसंश्रितक्रमं
तद्धितं तव बहिर्विजृम्भणम् ॥ १५ ॥

---

१ उदितोर्ध्वं २ प्रत्यहं ३ सतत्व ४ कस्य ५ त्रिधा ६ निराकृति ७ मपा
८ हि श्रुतं ९ निषिध्यते

सत्वमम्ब विहितस्य वस्तुन-
स्तत्प्रसादितदयो[1] दयंवपुः ।
स्यात् तमश्च यदिदं निषिध्यते
द्वे रजो[2] सदसदन्यरूपतः ॥ १६ ॥
यत्तमोऽन्यदिह तच्चितेर्वपुः[3]
सत्वमन्यदिह तेजसः शिवे ।
मिश्रणोत्थमितरद्रजस्तयो-
स्त्वत्कसत्वशमतो[4] गुणत्रयम् ॥ १७ ॥
ईश्वरस्य तव भर्तुरत्वयै-
श्वर्यरूपमसि तत्वमम्बिके ।
ज्ञानमस्य शुचि कर्म वा फलं
ते विरागमयपूर्णता फले ॥ १८ ॥
ज्योतिरम्ब हृदि विद्यचेत्वितं
यल्लघु प्रसृतमर्थमण्डपे ।
धूमलक्ष्म गुरु यच्च तच्च्युतं[5]
ते तु सत्वतमसी वपुस्तव ॥ १९ ॥
त्वं हि[6] रुद्रजकटाक्षवर्त्तिनी
जायमानमवलोक्य चण्डिके ।
सांख्ययोगपथदेशिकद्वयं
जातसंमतिसमाधिकं[7] यथा ॥ २० ॥

१ तयोद २ द्वैरजो ३ क्षितिर्वपुः ४ सत्वजमतो ५ तच्च तं ६ त्वन्तु ७ समीप्सितं

सप्रकाशकृतमज्जनं[1] जगत्
कुर्वती भवति पूर्णिमा शिवे ।
पूर्णमेव तव रूपमन्यथा
कुर्वती किल कुहूः प्रतीयसे ॥ २१ ॥
पूर्णताकृशतयोर्यदन्तरं
तत्र कालिविजहत्क्रमे स्थिता ।
दर्शितक्रमविभागसंभ्रमं
कालमद्यतनमत्तुमीहसे[2] ॥ २२ ॥

॥ इति आदि ( सूत्र ) विमर्शः ॥

## द्वितीय-विमर्शः

मातृमेयमितिसाधनात्मिका
त्वत्कृतोन्मिषति या विकल्पधीः ।
त्वत्स्वरूपमकलङ्कितं तया
कस्य देवि विदुषो न मुक्तता ॥ २३ ॥
अक्रमक्रमविमर्शलक्षणां
या क्रमाक्रममयी क्रमाक्रमम् ।
अक्रमं शिवमवेद्य मध्यगं
त्वां च सत्कुलमिदं तवाननम्[3] ॥ २४ ॥

---

१ स्वप्र २ मीहते ३ तवासनम्

वेद्यवेदकविभेदद्त्तया
मायया क्रमवदङ्गगामिनी ।
या स्थिताम्ब बहिरत्तकांक्षिणी
तां जहि त्वमणुतां मयि स्थिताम् ॥ २५ ॥

कर्म यद्विविधवासनात्मकं
मायया सह कृताणुभावया ।
वृत्तिभिस्तव विलाप्यते हि तद्
देवि भानुरुचिभिर्यथा तमः[1] ॥ २६ ॥

चिन्मयीकृतमतोऽत्तदृश्यया
गुह्ययाऽम्ब विपरीतचर्यया ।
लभ्यते समरसीकृताखिल-
द्वैतवृत्ति तव घस्मरं वपुः ॥ २७ ॥

याश्चरन्ति तव खे चिदात्मके
शक्तयः करणलक्षणाः शिवे ।
मुक्तबाह्यपदजृम्भणोद्यमा
त्वं हि तिष्ठसि तदूर्ध्वगे पथि ॥ २८ ॥

सप्तधा वमसि या त्वमीश्वरि
व्योमशान्तमुखचिद्गुणास्पदम् ।
आश्रितान्नयसि नापरं शिवं
द्वन्द्वयाऽद्वयपदातिलङ्घिनी ॥ २९ ॥

---

१ हिमम्

या प्रमातरि निषेदुषी परा
प्रत्यगात्मनि विमर्शविग्रहा ।
वागियं त्रिविधभावभासिता
त्वां स वक्ति किमुताऽम्ब वैखरी ॥ ३० ॥

नादबिन्दुलिपिविग्रहा गिर-
स्तिस्र ऊर्ध्वगविमर्शशीकराः[1] ।
संहृतिस्थितिविसृष्टिधामसु
व्याहृतास्त्वदध ईशवल्लभे ॥ ३१ ॥

दृक्क्रियात्मशशिभानुमध्यगं
खे चरत्यनिलवत् सुधामयः[2] ।
यत्तदूर्ध्वशिखरं परं नभ-
स्तत्र दर्शय शिवं त्वमम्बिके ॥ ३२ ॥

वैखरीप्रभृतिवाक्त्रयं परे
मेयमानमितिकर्तृलक्षणम्[3] ।
उद्भवस्थितिलयात्मकं वपु-
र्भुरिभेदमपरं स्मरन्ति ते[4] ॥ ३३ ॥

विश्वमूर्त्तियदहृष्टविग्रहं
त्वत्प्रशान्तिपदमैश्वरं[5] वपुः ।
तत्र ते य उदयः कुलेशि[6] तं
सृष्टिराश्रयति पञ्चवाहता ॥ ३४ ॥

१ शक्तिकाः २ चरत्वनलयष्टिधामयत् ३ मितरत्रलक्षणम् ४ यत् ५ तत् ६ छवेशि ।

या परा स्फुरति शक्तिरम्बिके
तत्र हि त्वयि पयोधिवीचिवत् ।
शिञ्जिकावयवकार्थपञ्चकं
वर्त्तते विविधसूक्ष्मविग्रहम् ॥ ३५ ॥

त्वन्मुखं त्रिपथनेत्रिभात्मकं
शक्तिवृन्दमिह तुर्यथागमम् ।
द्वादशक्रमपदं पदादिभि-
र्जृम्भितं[1] जगति तच्चतुस्त्रिकैः ॥ ३६ ॥

मानमेयमिति नेत्रलक्षणाः
सोमसूर्यदहनास्त्रिधामगाः ।
राशिराजिविधिभञ्जितैः स्वरै-
र्लक्षितास्तव हि विप्रुषोऽम्बिके ॥ ३७ ॥

आहतेतरदुरुत्तराश्रय-
स्त्वत्पदादुदयते शिवात्मके* ।
अद्वयाद्विषयचित्प्रथातनु-
र्दृग्विमर्श इव[2] वाचको स्वरः ॥ ३८ ॥

अम्ब धामकरणप्रयत्नजो
वैखरः स्फुरति शब्द आहतः ।
मानसः पुनरसावनाहतो
वासितस्त्वदुपलक्ष्य वित्तमः[3] ॥ ३९ ॥

---

१ बृंहितं २ इह ३ उत्तरः * शिवात्मके

षण्डवर्जमहिमद्युतेः कला
सर्गबिन्दुरहिताश्च ये शुचेः[1] ।
सर्व एव शशिनः कलाः शिवे
योनयो विधृतबीजतत्पराः[2] ॥ ४० ॥
बीजयोनिविधिभेदभेदिता
मातृकामनुजमातृलक्षणा[3] ।
शक्तिरम्ब भवति क्रियामयी
त्वत्तनुर्जयति पारमेश्वरि ॥ ४१ ॥
बिन्दुरक्षरमयं क्रियामयं
योनियन्त्रमतिबुद्धिलक्षणाः[4] ।
नाद इष्टतनुरन्यकारणं[5]
त्वं परे त्रितयधर्मरूपिणी[6] ॥ ४२ ॥
उद्यमः प्रथम ऊर्मिरुत्तरो
निस्तरङ्गशिवचित्पयोनिधेः ।
प्रागचित्पदपरिग्रहात्तव[7]
व्योमनीश्वरि तनुर्महोदयः[8] ॥ ४३ ॥
स्फारिता[9] जननि सेय[10]मेषणा
खेचरत्वसमुपाश्रिता[11] दिशि ।
अक्षचक्रमनुजग्मुषी गवी
प्राप्तगोचरपदा भवस्वयम्[12] ॥ ४४ ॥

१ शुभे २ तैत् स्वराः ३ छकृत ४ यो नियन्त्रयति ५ रस्य ६ पिणि ७ त्ततो ८ दया ९ स्वा-
दिता १० नेय ११ त्यछ १२ भवः ।

खेचरीप्रभृतियच्चतुष्टयं
सारमम्ब[१] तव तद्बहिर्वपुः ।
यद्द्वयाद्वयविभागघस्मरं
तन्निरंशमबहिर्न[२] वाक्पदम् ॥ ४५ ॥
पञ्चवृत्तितनुरम्ब निर्गता
शक्तिरर्पितकुलप्रथा[३]सना ।
त्वं शिवावकुलतः समेयुषि
तेन तत्र पुनरेष[४] विश्रमः ॥ ४६ ॥
युक्तितोऽम्ब तव वृत्ति पञ्चकं
पञ्चभूत गुणवृत्ति लक्ष्यते ।
धर्मिवृत्तिकृतसिद्धनामकं
धर्मवृत्तिकृतशक्तिनाम ते[५] ॥ ४७ ॥
ब्रह्मणः प्रभृतिसिद्धपञ्चकं
भारतीप्रभृतिशक्तिपञ्चकम् ।
उन्मनीं स्मरति यस्तवाकृतिं
सिद्धवर्त्मनि[६] जयत्यसौ जनः ॥ ४८ ॥
त्वं प्रकाशयसि यं ससृज्यते
धर्मिधर्मतनुरर्थ ईश्वरे ।
यः प्रकाश इह सत्वया कृतः
तत्तदाकृतिरुपैति सृष्टिताम् ॥ ४९ ॥

१ हंसम २ नु ३ प्रभा ४ रेषि विश्रमम् ५ यत् ६ पर्वणि ।

त्वं हि चित्तनुरतो न चित्तता
स्वेन[१] ते विषयचित्ततां[२] विना ।
शिष्यसे यदि विनार्थमण्डलं
सर्गसीमनि कुतोऽस्ति[३] चित्तता ॥ ५० ॥

वासना च न विचित्रतापदं[४]
तत्प्रसूस्त्व मिह केवलैव चेत् ।
शक्तिलक्षण जगद्भृतोदरी
मानसैन्द्रियकवस्तुसूरसि[५] ॥ ५१ ॥

सार्वकालिकमिदं जगत्त्वया
भास्यते विधृतशब्दरूपया ।
आन्तरञ्जननि बुद्धिरर्पणे
बाह्यमद्यतनमक्षरूपया[६] ॥ ५२ ॥

यावदम्ब पुरुषस्य शान्तत
सप्तमीसकलभाववर्तिनः ।
तावदद्वयविमर्शभिन्नता
सार्वकालिक[७] विमर्शभाविता ॥ ५३ ॥

अम्ब तज्जडमुशन्ति भेदधी-[८]
यद्गुणैः स्फुरदपोह्यते क्रमात् ॥
चित्तदाकृतिनिराकृतिः[९] स्वतो
भाति या सकृदसौ त्वमेव[१०] सा ॥ ५४ ॥

१ स्वेन २ चित्रतां ३ कुतोऽस्तु ४ परं ५ वस्तुनोरसि ६ रूढया ७ भावक ८ मेदिभि ९ रनाकृति
१० त्वयासि सा

जाड्यमम्ब जगतो निसर्गजो[१]
यत्परा प्रभृति भाति भेदतः ।
त्वं तु जाड्यपरिपन्थिनी स्मृता
या विभासि सकृदर्थमण्डपे[२] ॥ ५५ ॥
विश्वमेतदिति योऽह[३]मित्यसौ
नामरूपविरहेण निश्चिता[४] ।
सा त्वमम्ब न बिभर्षि भास्वतां[५]
आत्मनो यदसि धर्म ईशितुः ॥ ५६ ॥
आवदृक् स्मृतिवियुक्तमीश्वरे
शून्यरत्नमवलम्ब्य पुद्गलम् ।
निर्निरुक्तिकमिदं जगत्स्थितं
चिल्लयोर्ध्वगपथान्न तत्तथा ॥ ५७ ॥
शान्ततां भजदनाश्रितं पदं
शक्तिमात्र जगदेकसद्म यत् ।
निर्मलज्वलन शौचवज्जगत्-
तत्र हि त्वयि निमज्जितं त्वया ॥ ५८ ॥
सिद्धशक्तिमयभातृभासन-
व्याप्तिभाव[६] उपयुक्प्रकाशताम् ।
योऽयमर्थनिकरस्त्वदन्तिके[७]
त्वत्प्रमात्रभिमुखं तनोष्यसौ ॥ ५९ ॥

१ र्गतो २ मण्डपे ३ याह ४ निश्चिताः ५ भास्यतां ६ भाव इति यत् ७ स्त्वमम्बिके ।

द्रष्टृता[1] जगति यत्प्रकाशने
यश्च निश्चयविधौ प्रमातृता[2] ।
ग्राहकं[3] त्वमपि निश्चितग्रहे
वेदतः स तव वृत्तिपोषितः ॥ ६० ॥

आस्थितसदसदर्थमण्डलं
धीमनोक्षवपुरस्मितामयम् ।
यस्त्रयोदशविधः[4] स्वतन्त्रता
तद्द्वयोप्यहमसौ तवांशकः[5] ॥ ६१ ॥

तत्तदर्थमयभोग्य[6]लक्षणा-
नन्दमूर्तिरयमुत्तमः पुमान् ।
अर्पणेन जगतश्चिदम्बरे
भाति संहृतिमयः शिवे तव[7] ॥ ६२ ॥

अष्टधा स्फुरति या पुरी शिवे
सूक्ष्मभावमुपगम्य लैङ्गिकम् ।
तज्ज[8]पौष्टकृतचित्तवृत्तयो
वासनास्तदुरसि[9] स्थिते पशौ ॥ ६३ ॥

सर्गसंवृतिशरीरयोर्द्वयो-
र्भक्ष्यभक्षकपदस्थयोस्तयोः ।
अन्तरेद[10]महमास्थितः शिवे
धीमनोक्षवपुरर्पितं त्वया ॥ ६४ ॥

१ द्दष्टता २ प्रमातृका ३ हकत्व ४ यत्र या दशविधिः ५ तवाधिकः ६ भोग ७ ततः ८ तज्जु पौष्ठ ९ स्त्वदुदर १० अन्तरेवमहमा

राजनात् प्रकृतिरञ्जनाच्च मां
राजसंज्ञमनुबोधकर्मणोः ।
षट् त्वया पृथगमी प्रवर्त्तकाः
पुत्रभावमधिरोपितः[१] शिवे ॥ ६५ ॥

और्ध्ववाहमयबिन्दुलक्षणं
प्राणसूर्य इह चिद्द्विषट् कलः ।
तत्कलाधरतनोर्गुरुक्रमे
त्वं प्रकाशतनुसिद्ध[२] मण्डलम् ॥ ६६ ॥

यन्त्वधो वहननादलक्षणा
पानसोम इह भोग्यविग्रहः ।
तस्य षोड़शकलाः कृतास्त्वया-[३]
नन्दचक्रतनवो गुरुक्रमे ॥ ६७ ॥

वासरेशरजनीशयोः कला-
श्चण्ड[४] यावदुदयं वितन्यते[५] ।
तावदेव[६] दिवस क्षयोदय[७]
स्तत्वतः[८] प्रकटगुप्तविग्रहः[९] ॥ ६८ ॥

देवि तद्द्वयकलाविमिश्रया[१०]
सामरस्य पदमेति या स्थितिः ।
बिन्दुनादसमवेद्य वेदका-
न्तर्गता हि तव मूर्त्तिरत्र सा ॥ ६९ ॥

१ मधिरोपिता २ सिद्धि ३ कृतात्मया ४ चण्ड ५ वितन्वते ६ तंचदेव ७ क्षया ८ त्वत्कृत ९ विग्रह १० श्रणा

लीढभानुशशिमण्डला[1] स्थिति-
र्लम्भिता[2] प्रलयवह्निना त्वया ।
प्राणधाम्नि दशसप्तधा सती
मूर्त्तिराश्रित गुरुक्रमा शिवे ॥ ७० ॥

इष्टबोधकृतशक्तयस्त्वया
संहृतिस्थितिविसृष्टिसद्मसु ।
तुर्यचित्पदमय प्रसारिताः
सुप्तितः प्रभृतिधामसु त्रिषु ॥ ७१ ॥

मेयमातृमिति[3] लक्षणं कुलं
प्रान्ततो[4] व्रजति यत्र विश्रमम् ।
तत्पदं तव तुरीयमम्बिके
यन्महद्भि[5]रनुपाख्यमिष्यते ॥ ७२ ॥

चाररावचरुभिर्विभेदितै-
र्मुद्रया च यदुपासनं तव ।
तद्वशेन भजते परम्परां
तावकक्रमगता[6] स्थिरीकृतिः ॥ ७३ ॥

मङ्गले त्वमसि वाक्चतुष्टये
या परा स्फुरति मूर्तिमण्डपे[7] ।
सा प्रकाशसुख[8]वृन्दचक्रभा[9]
नादविन्दुलिपिमूर्तिरिज्यसे[10] ॥ ७४ ॥

॥ इति द्वितीयो विमर्शः ॥

१ मण्डलस्थि २ लम्बिता ३ मान ४ प्राप्ततो ५ यं महाब्धि ६ तयास्फुटाकृति ७ मण्डले ८ मुख ९ चक्रगा १० रिष्यसे

तृतीय-विमर्शः ।

आद्यचित्प्रसरमूर्तिरम्बिके
पीततां व्रजति यत्कृतास्पदा ।
अक्षयं शिवमुपास्य तज्जनः
शक्तिचक्रजनितः प्रमुच्यते ॥ ७५ ॥

अम्ब शक्तिवपुषा त्वयोन्मिष-
द्रूपया समरसः शिवो यदा ।
यत्तदोल्लसति वीर्य[१]मूर्जितं
पीठ एष हिमहांस्त्वदुत्थितः ॥ ७६ ॥

या शिवे स्फुरण शक्तिरक्षया
क्ष्मादिपञ्चकनिविष्टभातनुः ।
सा महद्भवति वीर्यमग्रिमं
यन्मयी त्वमसि पीठचक्रसूः ॥ ७७ ॥

पीठचक्रनिकरैकधर्मिणी
त्वं स्थिता च सततं समन्ततः ।
सन्निरुध्यमनिरन्तरात्मभि-
र्लक्ष्यसेऽम्ब निरवग्रहोदया ॥ ७८ ॥

ईरणेन विविधेन वीरतां
योऽयमक्षरगणः[२] प्रपद्यते ।
अन्त्यमीशमयि तन्त्रधा[३]मकम्
वर्णशक्तिपदपञ्च[४]चित्कताम्[५] ॥ ७९ ॥

१ दिव्य २ गणं ३ मयुतं त्रिधा ४ पदवीञ्च ५ चित्कलास्

यानलार्कशशिविग्रहा कला-
नाहताम्बरविसर्पिणी शिवे ।
पीठतः प्रभृतियावदर्च्यते[1]
तावदुन्मिषति[2] तन्मयी सती ॥ ८० ॥

निर्जनस्थितिलयप्रथात्मिके[3]
ग्रासनित्यनिरवग्रहोदयः
जृम्भितं[4] त्वदनुपाद्यदीप्तयो-[5]
द्दीप्तखं मनुरुमेत वासनम् ॥ ८१ ॥

नित्यभातरुचिविश्वघस्मरं
दुर्निरीक्षमपि सन्निकेतनम् ।
त्वं श्मशानमपि वीरहृद्गतं
क्षीणवृत्तिकरवीरमिज्यसे ॥ ८२ ॥

विश्वसंहरणलीलयोत्कटं
व्योम्नि शश्वदुदितं नीराश्रये ।
क्षेत्रपालमनुपाधिकोल्लसत्-[6]
त्वद्विमर्शमभिनन्दतीश्वरे ॥ ८३ ॥

खेचरीप्रभृतिरम्ब शाकिनी
प्रान्त एष तव यो गुरुक्रमः ।
सृष्टितश्च यदनाख्यविक्रमं[7]
चक्रमे[8] तदखिलं तवोद्गमः ॥ ८४ ॥

१ दर्चते २ न्मिषसि ३ थात्रया ४ जृम्मितस्त्व ५ दीप्पितो ६ लसत्तद ७ विश्रमं ८ मेकमार्ख

तद्द्वयोल्लसितमम्ब वर्त्तते
यत्र नित्यमिह सामरस्यतः ।
शौनिकेत[१]पदनित्यजृम्भितो-
ल्लास एष तव मे पुरस्सरः ॥ ८५ ॥

भोग्यभोक्तृरुचिघस्मरं मनः
पञ्चवाहमयमुच्यते तमः[२] ।
निर्निकेतपदमेति यत्र ते
कोऽप्यसौ सततमध्वरोत्सवः[३] ॥ ८६ ॥

पूर्णसत्वरजतादि[४] हृद्गता
निष्ठतात्व[५]खिल लोकवाहिनी[६] ।
पञ्चधा वहति शाश्वतोदया
सिद्धि[७]सिन्धुरिवसिद्धसेविता ॥ ८७ ॥

व्योमयान[८]मतितत्पुरस्सरः
पञ्चधा प्रसर एष तावकः ।
जृम्भमाणगुरुवक्त्रचित्पथो-
ल्लासिमूर्त्तिरियमास्थितो जगत् ॥ ८८ ॥

स्पन्दमाद्यमनुकुर्वती शिवे
निर्निकेतनपथोत्थिता गुणैः ।
शून्यधाम वमति त्वमिष्टित-[९]
प्रागधिष्ठितरवा विजृम्भसे ॥ ८९ ॥

---

१ सोनिकेत २ तनुः ३ तमुद्धृतो ४ तन्त्वार्खं ५ बिहृद्गतौ निष्पतन्त्य ६ पावनि ( नो )
७ सिद्धसि ८ यातमी ९ मिष्टिताः ।

चिच्चमत् करणारूढनिर्भरा
त्वं पुरा स्फुरसि सैव खेचरी ।
रूपसंग्रहणादर्शितैषणा
ते जनाः[1] स्वरसवाहिता[2]म्बिके ॥ ६० ॥
देवि नैकविषयोद्यमस्फुरा
रोहिणी भवसि सैव भूचरी ।
स्पर्शसंग्रहणनित्यसम्मुखी
स्वैरितां न जहसि[3] स्वभावजाम् ॥ ६१ ॥
प्रत्यगात्मनि दृशो वकुञ्चना[4]
विश्वमन्नमुदरे वितन्वती ।
ग्रस्य संहृतिमुखेन दृक्चरी[5]
सैव देवि रसचर्वणोन्मुखी ॥ ६२ ॥
प्रान्त[6]चित्तमुखतोऽधितस्थुषी
स्वस्वरूपमनिकेतमञ्जसा ।
रौद्रभावकृतबाह्यजृम्भणा
गोचरी त्वमसि[7] गन्धहारिणी ॥ ६३ ॥
ब्रह्मविग्रहकलाधिरोहिणी
पञ्चवाहवपुषः कलास्तव ।
सामरस्य घटितोदया शिवे
शश्वदुल्लसति सिद्धमण्डलम् ॥ ६४ ॥

---

१ तेजसा २ वादिना ३ तामजहति ४ वकुण्ठना ५ दिक्चरी ६ प्राप्त ७ त्वमपि ।

भानुशीतकरवन्हिकुण्डली
बिन्दुसूत्रितपरावर[1]स्थला ।
रुद्रशक्तिरपि[2] कालकर्षिणी
त्वत्कपञ्चविध[3]वृत्तिसूचिनी ॥ ९५ ॥

घोषबाडबशिखास्तदुत्तरं
बिन्दुनादयुगलं च यत्पदम् ।
स प्रसाद[4] इव पञ्चभिः शिवे
त्वां कलाभिरनु[5]क्लृप्तमोमपि ॥ ९६ ॥

इन्दुशूलवृषटङ्कमातृका
कालबीजधृतपञ्चभूमिकः ।
लोकसन्धिविहितध्रुवोदय-
श्चिन्मयश्च तव देवि दर्शितः ॥

यज्ज्वरादिपदमम्ब वायुना
यां शिखा मधुसपन्नगास्पदा ।
यानि सामधुनिविष्क[6]स्त्रृष्टिका
पंक्तिरप्यनुकरोति ते स्थितिम् ॥ ९८ ॥

यन्नभः स्फुरति यो मरुत्त्वया-
धिष्ठितो विधृतसर्गरुपया[7] ।
या शिखा यदुतवारियज्ञसू-
र्याम्ब पङ्क्तिरपि तैस्तथाविधः ॥ ९९ ॥

१ रापर २ क्तिरिह ३ ञ्जतिथ ४ सम्प्रसाद इह ५ भिदनुक्त ६ विष्टसृष्टिता ७ शब्दरू ।

भूचरी वहसि दण्डतः क्रमं
मुण्डतोऽपरचतुष्टयी च सा ।
भोग्यभोक्तृकलनोर्मिसंक्षये
सामरस्य रसरोहिनी[1] शिवे[2] ॥ १०० ॥

यस्त्वनाहतधृतोर्ध्व[3]वारग[4]
स्त्र्य[5]श्रमूलगगनस्थितस्वरः[6] ।
तत्र देवि वियदग्रपार्श्वया[7]
मध्यगा वहसि पञ्चधा क्रमः ॥ १०१ ॥

पञ्चवर्णमयपिण्डगामिनी
मञ्चपञ्चकतनुस्त्वमम्ब या ।
देवि वर्णनवभासिनः[8] क्रमा
सामरस्य कृतपञ्चवृत्तिका ॥ १०२ ॥

शून्यमम्बमहमुच्यते त्वया
यत्त्वमत्र गगने सदोदिता ।
दिव्यमोघमत उद्गिरन्त्यसौ
स्पर्शमुज्झसि हि वामविग्रहा ॥ १०३ ॥

अम्बरस्यपरमागतं[9] शिवे
सैवचित्तमनघा स्वभावतः ।
स्पन्दमेत्य परमं विराजते[10]
खेचरी[11] प्रणतखेचरत्वया[12] ॥ १०४ ॥

---

१ दोहिनी २ शुभे ३ हतोर्ध्व ४ पारग-पादग ५ तत्र ६ तो स्वरः ७ विघद ८ इव मासि नि-ष्क्रमा ९ मार्थता सदा १० हिरा ११ चरि १२ चरः सदा

व्यक्तमक्रम विजृम्भितां[1] शिवे
त्वं विसृष्टिभुवनद्वयोद्या ।
सैव संचरसि संश्रिता यदा
भूचरी भवसि संज्ञया तदा ॥ १०५ ॥

स्वं वपुः स्फुरणशक्तिलक्षणं
तत्तदर्थमयमम्बिके क्षणात् ।
सैव चेन्निजपदान्तवर्त्तिनः[2]
संहरस्यथ तथासि दृक्चरी[3] ॥ १०६ ॥

प्रत्यगर्पितमुखी भिदा त्वया-
द्यै[4]करस्यमधिरोपितं त्रिधा[5] ।
स्वं क्रमं ग्रससि सैव चेदसौ
गोचरी खलु महाम्बरान्तगा[6] ॥ १०७ ॥

पञ्चसु स्फुरसि देवि वृत्तिषु
त्वन्मयीषु[7] यदि काचन[8] स्वतः ।
शश्वदाशु निखिलास्तदैव[9] ताः
सामरस्यमधिरुह्य भान्त्यमूः ॥ २०८ ॥

निर्णिकेतन तयाम्ब खेचरी
स्फारिता गगनवामया[10]त्वया ।
नाद[11]सर्गनिहितस्ववैभवा
दिक्चरीस्फुटमधिष्ठिता यया ॥ १०९ ॥

१ म्भिता २ र्त्तिनि ३ दिक् चरि ४ दैक ५ क्रिया ६ महीश्वरान्तगा ७ तन्मयी ८ काचशश्वतः ९ स्तथैव १० कामया ११ नाथ

क्षोभमम्ब तव तावदिष्टतो
द्व्यष्टरश्मितनुनादविग्रहा ।
बिन्दुभूमिमधितस्थुषी स्फुटा
नन्दचक्रविभवासि भूचरी ॥ ११० ॥
दिक्चरी त्वमसि बिन्दुभास्करा
जृम्भिता बहिरिहाम्बनिर्गता ।
अर्थपञ्चकमलं ग्रसत्यसौ
भूचरीं नयसि निर्विभागताम् ॥ १११ ॥
तद्द्विपञ्चकलवह्निविग्रहं
सततच्छिखमशेषघस्मरम् ।
मूर्त्तिचक्रमधिरुह्य दिक्चरी
त्वं परा[1] विशसि वाचमद्वया ॥ ११२ ॥
चेतसः कृतमदास्वजृम्भया
त्वं निजं वियदभूमिजग्मुषी ।
गृह्णती परममम्ब चित्पदं
मङ्गलासि विधृताहृतिः परम्[2] ॥ ११३ ॥
अस्वराग्रिमविकास[3]धर्मिणी
विश्वचक्रपरिमेलनोद्यमा ।
भावनादिकलनातिवर्तिनी
पञ्चवक्त्रधिपीठमिज्यसे ॥ ११४ ॥

१ पदं २ परा ३ कासिध ।

बिन्दुनाद[१]शशिपीठभास्वरा
ज्वालराजभगकालविग्रहा ।
अस्वराख्यपरमाम्बरात्मिका
मङ्गला त्वमसि वाक्त्रयातिगा ॥ ११५ ॥

द्व्यष्ट[२]धामनिलया चितिः शिवे
स्फारयन्त्यनिशमात्मनो बलम् ।
निर्निकेतनपदा[३] तनोष्यसौ
ज्ञानरश्मिविसरं सदोदितम् ॥ ११६ ॥

अन्तरम्ब[४] बहिरप्यमीकरा
ये तवा[५]न्ततनवोऽङ्क एष यः ।
विग्रहद्वितयमप्यतः परं
चिन्नभो नयसि नः करं किणी ॥ ११७ ॥

यत्प्रकृत्यवधितत्त्वमण्डलं
क्ष्मामुखं परिमितग्रहास्फुटम्[६] ।
क्रोधनी त्वमसि सञ्जिहीर्षया
मन्त्रमूर्त्तिरिह ते विजृम्भते ॥ ११८ ॥

देवि कार्यकरणास्वयं[७] वपु-
स्त्वं त्रिशक्तिविसरद्गुणात्मकम्[८] ।
मान्त्रमुग्ररससंकुलं परं
वीर्यमानयसि तज्जिहीर्षया ॥ ११९ ॥

१ तुल्य २ द्व्यष्टधा ३ परा ४ रङ्गब ५ नवाक्ष ६ हास्पदम् ७ णाह्वयं + णाद्वयम् ८ णाख्यया ।

ग्रन्थयोऽपि षडुमे यया धृता
सा निरावरणचिन्नभः पदा[1] ।
स्पन्दमूर्तिहृतभेदडम्बरा[2]
भैरवी त्वमसि विश्वभेदिनी ॥ १२० ॥
अष्टपुर्युदितबीजवासना
संहृतिप्रणवरश्मिपुञ्जया ।
लीढमात्रमुखभेदिता त्वया
भूयसे जननि लेलिहानया ॥ १२१ ॥
त्वं पराप्रभृतिवैखरान्तिमो-
ल्लेखविस्तरविलाप[3]नोन्मुखी ।
देव्यनावरणशम्भुसङ्गगा
खेचरी भवसि[4] चिद्विकासिनी ॥ १२२ ॥
वह्निसूर्यशशिधामघस्मरी
कुण्डली तटिदिवोत्पतन्त्यसौ ।
शाम्भवं जननि बिन्दुमध्वना
मध्यमेन च गतासि खेचरी ॥ १२३ ॥
मुद्रितस्वकृततत्त्वमण्डला
जृम्भते[5] स्वजठरे सदोदिता ।
वृन्दचक्रगतपञ्चभेदगा[6]
त्वं शिवे दिशसि योगजां श्रियम् ॥ १२४ ॥

१ परा २ मम्बरा ३ पकोन्मु ४ त्वमसि ५ जृम्भिकेऽस्य ज ६ भेदना ।

ज्ञानमम्ब तव भेदितैः स्वरै-
स्तैस्तु योग इह षराड[1] वर्जितैः ।
व्यञ्जनैरुदयते महान्तिकै-
र्मन्त्रशक्तियुगलं कहादिभिः[2] ॥ १२५ ॥

बिन्दु चक्र[3] शशिकुण्डली शिखा
मूर्तिरम्बरगता चतुर्विधा ।
शक्तिरत्र कृतशम्भुभेदना
षष्टिरम्बरगताश्चतुष्पराः ॥ १२६ ॥

आदिहान्तनिजदेहनिर्गताः
षष्टि[4]रत्र चतुरुत्तरा रुचः ।
खेचरी जठरनिष्ठितास्त्वया
मङ्गले परमभेदतः कृताः ॥ १२७ ॥

ज्ञानदीधितिषु रौद्रदीधिते-
र्मन्त्रदीधितिषु वामयोदितम् ।
योगदीधितिषु जृम्भतेऽम्बिका
ज्येष्ठयेवमथ शक्तिदीधितिः ॥ १२८ ॥

देव्य[5]भेदितकला चतुष्टया
शम्भुदीधितिषु दीप्यते स्वरः ।
मत्स्थितित्वमपि वर्णभेदिनी
मङ्गले वहसि[6] यत् प्रधानताम् ॥ १२९ ॥

---

१ षड्ज २ कयादि ३ खराड ४ शक्तिर ५ देवि भे ६ भवसि ।

सर्वदैव सकृदास्थितोदया
सर्वतः क्षपितकल्पना भिदा ।
इत्थमेकवपुषा त्वया निजा
स्फारिता महति लक्ष्मचित्विषः[१] ॥ १३० ॥
उद्यमप्रथनचर्वणात्मकं
जागरादिपदमम्ब यत्क्रिया ।
यत्तुरीयमपि तद्विलापनं[२]
भातनुस्त्वमखिलेऽत्र जृम्भसे[३] ॥ १३१ ॥
या निकल्परहितोच्चमण्डला-
रूढ उल्लसति मातुरम्बिके ।
प्राग्विमर्श इह तन्मुखी प्रथा
ज्ञानमर्थ[४] विधृता तनुस्तव ॥ १३२ ॥
ईदृगेतदिति तत् प्रथास्थिते-
यो विमर्श उदितोऽन्तरक्षतः ।
मन्त्र एष[५] तव बृन्दचक्रगो[६]
यन्मुखी भवति तावकी[७] क्रिया ॥ १३३ ॥
भोग्यभोक्तृपरिघट्टनोल्लस-
न्निर्मलप्रमदनिर्भरोदया ।
लोलिताखिल[८]हृषीकवृत्तिका
युक्तिरम्ब तव विश्वमेलिनी[९]॥ १३४ ॥

१ लक्ष्मचित्पतिः २ द्विलापितं ३ जृम्भणो ४ नमत्र ५ एव ६ क्रको ७ लौकिकी ८ ताकुलहृ
९ लिनि ।

ज्ञप्तिमात्रमपनीतवासनं
निर्विकल्पमधिरुह्य चित्त्विषा ।
सामरस्यकृतशाश्वतोदया
त्वं हि शक्तिरधितिष्ठसीश्वरे[1] ॥ १३५ ॥
शून्यमम्ब गगनं हि या महत्
स्पन्दबीजमनिकेतमीयुषी ।
लीयते[2] झटिति चित्तया त्वया
शम्भुरश्मि वपुषाऽत्र भूयते ॥ १३६ ॥
ज्ञानमम्बसम[3]पूर्णचित्पयो
राशिलम्बिलहरी त्वमुच्यसे ।
तद्विमर्शतदुपा[4]श्रितक्रम-
ध्वंसमूर्तिशत[5]मूर्ध्वमण्डलात्[6] ॥ १३७ ॥
स्त्यायमानशिवचिद्रसात्मकं
भाववृन्दमधिरुह्य भामयी[7] ।
स्वानिलाग्निजलभूमिभासिनी[8]
शम्भुतः प्रभृति जृम्भते[9] शिवे ॥ १३८ ॥
स्फारतावकविमर्शपावक-
भ्राम्य[10]माणघनसारभात्मिका ।
पञ्चदिव्यकुलबीजविग्रहा
त्वत्विषोऽम्ब शिवचिन्नभः प्रदाः[11] ॥ १३९ ॥

१ तीश्वरे २ वीयते+पीयते ३ शम ४ तदुपग्रहक्रम ५ र्तिजित ६ मण्डला ७ भामया ८ सिनि ९ जृम्भसे १० द्राव्यमाण ११ पदाः ।

पञ्चचक्रतनुरेष जृम्भते[1]
निर्विकल्पशिवबोधचित्कला[2] ।
पञ्चसु क्रममहीरुहाः शिवे
त्वन्मरीचिषु निरस्तवैभवम् ॥ १४० ॥
बीजमम्ब तव पंचधोदित-
स्फारितप्रगुणादेवताक्रमः ।
सिद्धिदोऽयमपरीतजृम्भणो[3]
यः प्रकाश इह सोऽन्तचक्रगः ॥ १४१ ॥
शंभुधाम्नि पतिताम्बरेश्वरि
शक्तिधामनि ततोऽनु खेचरि ।
भूचरी त्वमनुयोगधाम्न्यतो
दिक्चरी तदनु मन्त्रधामनि ॥ १४२ ॥
पंचमो[4] झटिति पातकः क्रमा-[5]
द्दियुषी स्फुरसि रौद्रवैभवात् ।
ज्ञानधाम्नि निखिलेशि गोचरी
न क्रमस्तव निराश्रये पदे ॥ १४३ ॥
ज्ञानतः प्रभृति पंचमं शिवे
यत्त्वमत्र परचिन्नभस्तनुः[6] ।
पंचवाहमयशक्तिगर्भिणी
भाससे प्रथनकेतघस्मरी ॥ १४४ ॥

१ जृम्भिते २ सत्फ ३ च्छिदोऽक्रमपरीतजृम्भणो ४ ज्ञमं ५ कक्रमा ६ भस्तनः ।

त्वं निरन्तरचिदम्बरात्मिका
वेलयाऽम्ब तुलितादयाम्बुधेः ।
त्वय्यमूर्झटिति संविदापगाः
पूर्णतां दधति निर्णिकेतनाः[1] ॥ १४५ ॥

पंचधा प्रनृतवैभवं[2] शिवे
चक्रमेतदिह[3] गोचरीकृतम् ।
विश्वभक्तनिरुपाख्यचिन्मया[4]
त्वत्पदाद् गलति नैव जातुचित् ॥ १४६ ॥

धाम यद् भवति मुद्रया समं
पातसंविदनिकेतनाश्रये[5] ।
याऽणु[6]भावकविकाकला च यत्
सर्वमम्ब तव बृन्दचक्रगम् ॥ १४७ ॥

अस्वरोल्लसनबीजमग्रिमो
क्षीणतो वपुरपाकृतक्रमः ।
नाद एष[7] तव विश्वदैशिकः[8]
कोऽपि संविदि विमर्श ईश्वरः ॥ १४८ ॥

ग्रन्थिपञ्चकविभेदिनी चितिः
पञ्चतारलिपिवृत्तिसूचिता ।
येयमम्ब परधाम्नि ते तनु-
र्योनिपञ्चकमयी निराकृतिः ॥ १४९ ॥

---

१ सनाम् २ भैरवं ३ दिति ४ न्मयं ५ नाश्रये ६ यार्णभावकलिता ७ एव ८ देशिक ।

स्पर्शवर्णमयपञ्चवर्गजै-
र्विस्तरैर्जननि मुद्रिता त्वया ।
व्यक्ति[1]भेदरचना समन्ततो
व्यक्ति[2]धामसहिता जगन्मयी ॥ १५० ॥

आदितः क्रममयीभिरम्ब याः
पञ्चभिर्भवति योनिभिः स्वतः ।
अक्रमक्रममयस्त्वदाश्रयात्
सक्रमः स्फुरति सृष्टिलक्षणः ॥ १५१ ॥

केवलं जगति यानिरक्रमो
योग[3]मूर्तिरिह ते सतां मता ।
योनिरत्र महती तदुत्तरा
सा यदेतदवभासनं तव ॥ १५२ ॥

शङ्खयोनिरत उत्तरा धृता[4]
वृत्तिरम्ब तव यत्तु चर्वणम्[5] ।
कालविग्रहविलासनं पुनः
पद्मयोनिरपि देवि कस्य[6] या ॥ १५३ ॥

निस्तरङ्गजलधिक्रमा स्थिता
कालिधाम्नि तव भेदघस्मरे ।
दिव्ययोनिरिह ख[7]स्वरूपिणी
निःस्वभाव उदयः परस्तव[8] ॥ १५४ ॥

---

१ व्यक्त २ व्यक्त ३ योगि ४ राहृता ५ चर्वणा ६ रपि ते विकस्वराः ७ स्वस्वरू ८ पदस्तव ।

स्वस्वरूपमथ विश्वमूर्तिदृक्
सिद्धगाढपरिरब्ध[1] विग्रहाः ।
स्पर्शमुक्त[2]मधिरुह्य पञ्च्यते[3]
योनयो विधृतमुष्टि[4]मण्डलाः ॥ १५५ ॥

जागरा मुखचतुः पदाद्वयो
न्मेषसंस्फुरितमातृलक्षणा ।
निर्द्वयाद्वयगतिर्महाखगे
द्राक् तवाम्ब पतिसिद्धमण्डली ॥ १५६ ॥

कुण्डहृत्स्वरचतुष्टये स्थितो
व्यक्तितः[5] प्रभृति यो जगत्क्रमः ।
तस्य गोपक उदग्रवैभवो
योऽवतार इह साम्ब ते प्रथा ॥ १५७ ॥

स्पन्दमूर्तिमविनश्वरं खगं
स्पर्शशून्य इह हंसमास्थितेः[6] ।
ईश्वरस्त्रिपथभक्ष्यधाम[7]गो
यस्तमम्ब भजते खगेन्द्रताम् ॥ १५८ ॥

प्रातिभं प्रथम उद्यमोऽम्ब य-
श्चित्र विश्वरचनादरो[8] द्वयः ।
कूर्मवृत्तिमनुकृत्य कूर्मतां[9]
यात्यसौ तव निवेशितः[10] पथि ॥ १५९ ॥

---

१ रब्धि २ मूर्त्ति ३ वर्तते ४ सृष्टिम ५ व्यक्ततः ६ स्थितः ७ व्योम ८ नोदरे द्वयः ९ कुर्वतां १० विवेशतः ।

मेष एष उदयः परो मम
छन्दतोन्नतनुतां वहत्युमे[1] ।
नित्यतुर्यमहिमा ग्रसन्निभं
मेष एति तव धाम्नि संस्थितिम् ॥ १६० ॥
छन्दतो मम निराश्रये पदे
मुक्तबाह्यपदसिद्धकल्पनाः ।
संविदो वसत यूयमित्यमूः
शास्त्यसौ तव निरर्गलः शिवे ॥ १६१ ॥
निस्तरङ्गपरमाद्वयप्रथा-
म्भोनिधौ प्रतिनिवर्त्तितः[2] क्रमः ।
विश्वमन्नमुदरं नयत्युमे
मीन उत्कटविमर्शवक्रगः[3] ॥ १६२ ॥
निर्निकेतमहिमानिराकृति-
स्तावकोऽयमवभासनक्रमः ।
स्वस्थशक्तिविसरत्समाहितो
यत्र सिद्ध[4]निवहोऽम्ब जृम्भते ॥ १६३ ॥
क्षान्तयादिकलिताक्ष[5] चक्रगो
धीनिरासकृततद्विचारणः ।
खण्डचक्र उदितोऽम्ब ते क्रमो
रुद्रसंख्य इह संसृति[6]क्रमः ॥ १६४ ॥

१ न्त्युु २ र्तितक्रमः ३ वक्त्रगः ४ शक्ति ५ क्षौन्त्यादिकविताक्ष ६ संहृति ।

निश्चितग्रहनिर्देश[१]वर्जितो
युक्तयुक्तयतिगतोऽक्रमः परः ।
सत्पथोदितस्वधामगः शिवे
खण्डचक्रविसरस्तवोत्कटः ॥ १६५ ॥

व्यक्तिमत्तदितरक्रमप्रथा
गुप्तकृत्त्वतबहिर्जगत्क्रमः ।
निर्गतोधमहार्थजृम्भितः
संभृतो[२] जननि तेऽन्वयः[३] क्रमः ॥ १६६ ॥

ग्राह्यतद्ग्रहविधातृसंभ्रमो
नादयुग्म इह विश्रमोन्मुखः ।
रुद्रसंख्य इममत्तुमीहते
तावके तव मरीचिरम्बिके ॥ १६७ ॥

यो दशेन्द्रियनिविष्ट उद्धृतोऽ-
प्यर्थ आत्मजड़भेदविप्लुतः ।
तत् क्षयाय वत कालकर्षिणो
स्त्वत्समुल्लसति तावकी रुचिः ॥ १६८ ॥

अक्षचक्रनिवहोऽर्कसंख्यया
स्वस्वमर्थनिवहो[४] ग्रसत्युमे ।
चिच्चमत्करणनिर्भरा स ते
प्रत्यगुल्लसति तत्पदं गतः ॥ १६९ ॥

---

१ निवेश २ संहृतौ ३ ते व्ययक्रमः ४ मिहयो ।

तत्पुनर्झटिति नीतसन्ततिः
प्रेत्त्य देवि नव तुर्यथागमः[1] ।
निस्तरङ्गपरमाम्बरात्मगां[2]
सामरस्यमुपयान्ति दीप्तयः ॥ १७० ॥

आदिसर्गसमखण्डवर्जितं
स्वस्वरात्मरुचिचक्रगामिनी ।
व्यक्ततत्परतया स्थितं बहि-
स्तावदर्थरुचिचक्रमम्बिके ॥ १७१ ॥

निर्विकल्पपरमाम्बराश्रयः[3]
उज्झितेतरपदास्त्विषस्तव ।
स्फारिता हि[4] यदि पूर्णतामधात्[5]
संभ्रमं जगति बाह्यमीश्वरे ॥ १७२ ॥

चञ्चला तटिदिवाक्रमं परा
स्पन्दवृत्ति लहरी तवाऽम्ब[6] या ।
सोदयात् प्रभृति कल्पनां विना
वृत्तिभिस्तिसृभिरुज्झिता सकृत् ॥ १७३ ॥

अम्ब तत्र फलना पृथक्क्रिया
दृष्टितः[7] स्वपथगे[8] क्रमे च या ।
तद्विरूपममलं तनुक्रमोद्-
योगमुख्यचतुरूर्मिसंविदम्[9] ॥ १७४ ॥

१ र्यथामलः २ मात्मनाम्बिका + परमाम्बरात्मिका ३ श्रयाः ४ यदि च ५ मयाः ६ तताम्ब ७ गृष्टि + सृष्टि ८ पदगे ९ सञ्चितम् ।

एकमम्ब तव भान्त्यनावृतो
द्वादश क्रमचिदुर्मिडम्बरः ।
सृष्टिकाल्युदयमेति यन्मुखे
यं स्फुटो निरवधिर्निराश्रयः ॥ १७५ ॥

तस्य देवि हरसंभृते[1] वशाद्-
दुर्निरीक्ष्य तनुरुच्छ्रिताश्रयः ।
स्वस्वभावविहित[2] क्रमाक्रमे
द्वैध[3] एष तव चित्त्विषाश्रयः[4] ॥ १७६ ॥

यो मनोन्मनमनोन्मनीतरः
स्वस्वरूपचतुरात्मभावतः ।
द्वादशैक्यतनुरक्रमक्रमो
भैरवस्त्वमसि देवि ते स्थितिः ॥ १७७ ॥

ब्रह्मविष्णुहरमूर्तितां यतोऽ-
भ्येति तत्तव तुरीयमास्पपदम् ।
व्योम यत् क्रममयी त्वदीरणा
धूमहेलयखचक्रगा शिवे ॥ १७८ ॥

विन्दुगर्भनिहितं त्रिधामगं
तद्विशिष्टमुपरि प्रसर्पति ।
भेदनानिधनमों यदम्बिके
तत्तु मे परमतत्त्वदर्शनः[5] ॥ १७९ ॥

॥ इति श्रीकालिदासस्य कृतौ चिद्गगनचन्द्रिकायां
तृतीयो विमर्शः ॥ श्रीः ॥

१ संवृते २ निहि ३ द्वैत ४ श्चयः ५ तत्वमेवपरतत्वदर्शनम् ।

## चतुर्थो विमर्शः

सत्वज[1]श्रुतकलावधि[2] त्वया
कालवह्निभुवना मरीचयः ।
भक्षणाय जगतः प्रसारिता
यल्लया[3]न्नृभिरणुत्वमुज्झ्यते[4] ॥ १८० ॥

वर्णमन्त्रपदजृम्भया समं
याः कलास्त्वदिह तत्वमण्डलम् ।
यानि तत्र भुवनानि चण्डिके
तत्र कृत्स्नमपि गृह्यते स्थितो[5] ॥ १८१ ॥

तै[6]र्निरावरणयुक्तिमास्थितै-
स्तावकाद्वयविमर्शसाधिता ।
अन्तराहितषडध्वमण्डपे-[7]
र्योगिभिर्जननि शश्वदीड्यसे ॥ १८२ ॥

मूलतः प्रभृति पावकाश्रया[8]द्
द्वादशान्तनिधनाः शिवे जगत् ।
वाहतत्प्रथनयोर्निषेदुषी
मज्जयस्व तव धाम्नि चित्पदे[9] ॥ १८३ ॥

ये निरावरणयुक्तिशालिन-
स्तां प्रतिस्फुरति तत्परं नभः ।
यत्र मेयमितिमातृघस्मरे
वासनापि न जगद् विभेदगा[10] ॥ १८४ ॥

---

१ सत्वन २ धिस्त्वया ३ यल्लया ४ उज्झिते ५ दह्यते स्मृतौ ६ त्वं नि ७ णडले ८ श्रया ९ यत्पथे १० दना ।

वृत्तिसंहरणमेव[1] मातरि
व्यज्यते न खलु संस्तुति[2]त्त्वयः ।
तद्द्वयं च तव धाम्निसंभृतं
चण्डिकेयमिति चण्डिमा त्वयि ॥ १८५ ॥

भूतयन्त्रनिलयास्तवाम्बिके
शक्तयोऽध्वरथवृन्द[3]मास्थिताः ।
त्वत्पदं हि विषयामृतासवैः[4]
स्वस्ववृत्तिकुसुमैर्यजन्त्यमूः ॥ १८६ ॥

गोचरीप्रभृतिशून्यपश्चिमं
भूत[5]षट्कमवमज्य धाम्नि ते ।
स्वप्रथे[6] प्रमदनिर्भरापरं
शक्तयो दधति दर्पमीश्वरे ॥ १८७ ॥

द्वादशाम्ब करणा[7]त्मगौरवै-
मातृवह्निविदिते त्वदम्बरे ।
विश्वमेत्य सहसा मरीचयोऽ-
श्नन्ति चिन्मुकुरबिम्बितं जगत् ॥ १८८ ॥

बाह्यमीश्वरि विना सुदर्पणे[8]
बिम्बमेतदनुकारिणी तनुः ।
व्याप्ततामुपयुषि त्वदम्बरे
युक्तिमर्हति न बिम्बबाह्यताम् ॥ १८९ ॥

---

१ मेव २ स्मृति ३ बिन्दु ४ रसैः ५ भातृष ६ प्रभे ७ किरणात्मनोखेः ८ विनाद्दर्पणो ।

अस्ति[1]बाह्यमिति तत्प्रथेत चेत्
तादृशप्रथनगर्भिता हि[2] तत् ।
स[3] प्रवेदयषि निष्प्रमाणकं
मानमम्ब खलु साध्यते प्रथा ॥ १६० ॥
ईदृगेतदिति चैव मा फलं
तत्तथेति हि विमर्श आन्तरः[4] ।
निर्विबोध[5] उपधानशब्दवत्
कर्म सा त्वयि पुटत्रये[6] स्थिताः ॥ १६१ ॥
माययान्तरमपि स्थितं जगद्
वर्त्तमानमवभाति बाह्यवत् ।
भूतभाविंयुगलं यथापुरं[7][8]
विद्ययाम्ब तव वृत्तिरूपया ॥ १६२ ॥
त्वं गुहानिखिलभास[8]गूहनी
भामयेन वपुषाऽवतिष्ठसे ।
यच्च यस्तव पतिर्गुहाशयः[9]
प्राणिचक्रमखिलं च यस्य पूः ॥ १६३ ॥
भासितं जननि मायया बहि-
र्बिम्बमेतदनुकारि मानसम्[10] ।
मातुरेतदुभयं च बिम्बितं
तावके वपुषि यद्द्वयं[11] स्थितम् ॥ १६४ ॥

१ अम्नि २ तं हि सत् ३ न प्रर्वदयति ४ आन्ततः ५ निर्विवाध ६ त्रयी स्थिता ७ यथान्तरं ८ भाव ९ ह्राश्रयः १० मावनम् ११ विद्यया ।

वारि[१]वह्निमुकुरादिषु स्फुटः
स्वच्छवस्तुषु कुमारि बिम्बताम् ।
मन्त्रिता[२] सह परिच्छदेन यत्
तेन बिम्बमनवेक्षितं तव ॥ १६५ ॥

यत्स्मृतौ स्फुरति वस्तुबिम्बितं
स्वप्नसंप्रथमकल्पयोश्च यत् ।
बिम्बवर्जमिह तन्निदर्शना
त्वन्निमग्नमुदितं जगत्त्वया ॥ १६६ ॥

स्वप्नदृष्टमसदित्यसद्वचो
दिव्य एष यदिह प्रमाणतः ।
कल्पनापि न मृषा फलं शिवे
यत्स्थितं[३] गरुडभावनादिजम् ॥ १६७ ॥

ख्यातिरम्ब यदि याति पूर्णता-
मीदृगेतदिति कल्पनामयम्[४] ।
तत्तथेति[५] हि विमर्श उत्तरो
नान्तरेति परिमर्दयोग्यताम् ॥ १६८ ॥

अस्मिता यदि धृता जपे स्थितिः[६]
देवि तद्वदनजार्कसोमयोः ।
मारुते नभसि वा तदाकृति-
स्तत्कृतिं[७] च कुरुते हि पूरुषम् ॥ १६९ ॥

१ वह्निवारि २ मन्त्रता ३ स्मृतं ४ मयी ५ तत्तदेव ६ अस्मितं यदि धृतं जलस्थले ७ तिश्च ।

कल्पना यदि मृषेति भाषिता
धारणा फलति केन हेतुना ।
देवि संकलनबोधजीविता
देवता किमिति तैर्न[1] हीयसे ॥ २०० ॥
तन्न जग्मुरुदधौ स्वयौक्तितो
विष्णुरात्मजमदर्शि यच्चितः ।
तातमम्ब तनयस्य शङ्करो
दग्धमेष हि बहिः क्रमस्तव[2] ॥ २०१ ॥
रूपमेष्यति हयाननं हरे-
र्गोपसंज्ञमगमद् बहिः पुरः ।
तद्द्वयं च[3] भजतां बहिः[4] फलं
भावि चेन्न सदती तमम्ब या ॥ २०२ ॥
अक्षरेऽम्ब परमे वियद्वचो
यत्र यत्र सकला च देवता ।
तन्न वेदयति चेद्दचां फलं
तद्विदां तदिति हि स्फुटा श्रुतिः ॥ २०३ ॥
वह्निभानुशशिविद्युदातपं
ज्योतिरिङ्गणनभश्चरादयः ।
ये[5] स्फुरन्ति हृदयेऽपि सारवाः[6]
तैः[7] सदम्बरगतैर्हि भूयते ॥ २०४ ॥

१ कैर्न २ स्तथा ३ न ४ कुतः ५ याः ६ वारवाः ७ कैस्त्वद् ।

देशकालमवभासि यादृशं
यत्तया नु[1] भवितुर्विभेदिनः ।
तत्तया सकलमीक्ष्यते जनं[2]
मत्कृतस्मृतिमवेक्षते क्षणम् ॥ २०५ ॥

यद्यनङ्क्ष्यदनुभूतिरीश्वरे
सा स्मृतिस्तदितिना प्रथिष्यते ।
संस्तवो ह्यनुभवस्मृतौ स्थित-
स्तत्क्षयेऽनुभव एव न स्मृतिः ॥ २०६ ॥

संस्मृतिः सदृशवस्तुबोधिका
दृष्ट एव विषय[3]स्मृते रतः ।
दृक्शिवे विषयभानु[4]विग्रहा
तत्त्रिधा[5] स्मृतिरियं यदाहृता ॥ २०७ ॥

द्रष्टृदृश्यदृशिलक्षणां जगत्
प्राक् स्मृतेस्त्वयि तदम्ब संहृतम् ।
उन्मिषत्यपि पुनस्त[6]दुद्गमे
तल्लये निमिषति त्वदिच्छया ॥ २०८ ॥

सं[7]प्रमातुरिह जीवितं स्मृति-
र्यत्तां प्रकटयत्यमुष्य या ।
या च दृग्जननि निह्नुतेन ते
अप्युमे सह पुनर्विरूपताम् ॥ २०९ ॥

---

१ न ० स्मृतौ २ विषयः स्मृतेतरः ४ भान ५ तत्प्रथा ६ स्तवदु ७ सा प्रमा ।

दृग्विधत्त इह विश्वमम्बिके
तत्पुनः स्थिरयति स्मृतिस्तव ।
तन्मिथोपनिहिते[1] निषीदसि[2]
त्वं तु योगतमहीह (?) नाश्रिता ॥ २१० ॥

सृष्टिपालननिरोधलक्षणा
रूपतां वहसि बिन्दुलक्षणाः[3] ।
तद्विलक्षणपदात्तमम्बिके
चिन्मयी पुनररूपमुच्यसे[4] ॥ २११ ॥

भोग्यभोक्तृमयभा[5] विमर्शगा
देव्युमा[6] चिदुदरे दृढां दशाम् ।
अर्पयन्नलनसोममिश्रण-[7]
स्तद्विमर्श[8] इह भानुजृम्भणः ॥ २१२ ॥

दृष्टि[9]रूपमिदमम्ब भावितं
स्थेम[10]रूपकरणांशुभिर्जगत् ।
स्वादनाख्यमनिकेतयुक्तित-
स्तं पुन[11]र्लयमयेन चात्मना ॥ २१३ ॥

अक्षमाल[12]पशुभेदविग्रहात्[13]
त्यागसंस्मृति[14]हृतार्धरूपिणी ।
त्वत्पदे ग्लपितकल्पने लयाद्
भाति बिन्दुमिति किं न[15] मुद्रया ॥ २१४ ॥

---

१ परिहिते २ निषेधसि ३ लक्षणा ४ च्यते ५ गा ६ देवि मां ७ णात् ८ वक्ष ९ सृष्टि १० सोम ११ स्तद्वपुर्लयमनेन १२ मूल + शूल १३ ग्रहा १४ संभृतिध्रुवा १५ नु ।

याद्द[1]शासु निखिलासु सर्वदा[2]
सर्वतः स्फुरति[3] चित्परा सकृत् ।
गुप्त[4]भाषितजगद्विजृम्भणा
मन्त्रतां भजसि तत्त्व[5]मम्ब सा ॥ २१५ ॥

अक्ष[6]मात्रविसरच्छिखं शिवे
वह्निमुग्रमुदरे वितन्वती ।
ग्रस्तकालतनुभानुमत्कला
स्वोदये दिशसि शक्तिजृम्भणाम् ॥ २१६ ॥

तत्र ते सदसदर्थशून्यता
निर्वृति[7]र्जयति यत्र विश्रमः ।
मातृतत्करणगोचरोज्झिता
कालयकालमनु[8]तल्लयोऽस्तु मे ॥ २१७ ॥

क्षेपमम्ब वितनोति संख्यया
तद्ग्रहश्च सहसा परत्रये ।
अक्रमः स खलु काल ईश्वरे
प्रत्यमुष्य भवती च कालयसौ ॥ २१८ ॥

ते[9] बहिर्घनवृते रुचिस्तमो-
हारिणी वहसि हास्यरूपताम् ।
त्वं च चिन्नभसि माययावृते
तद्धि कालयसि परैस्त्वमीप्सिता ॥ २१९ ॥

१ दृशा २ वंथा ३ रसि ४ गुप्ति ५ नस्त्वमञ्जसा ६ अष्ट मार्ग ७ निवृत्तिर्भवति यत्र विश्रमम् ८ मनुतं लयो ९ खे ।

द्वादशात्मकविकालघस्मरी
कालकाल[1]शिवभूमिका वरा[2] ।
यादृशी भवति चण्डि तादृशी
त्वां विदुः कलितकल्पनापराम् ॥ २२० ॥
यत्कुलं त्रिविधमम्ब तद्भवो
यत्प्रकाश[3] उपलक्षितो[4] महान् ।
तत्र[5] यन्निखिलकल्पितोर्णवा-
स्त्वं यदूर्मि[6]रसि कृत्यलालसा[7] ॥ २२१ ॥
उन्मिषन्निमिषदच्युतद्वयं
विश्वमेतदुदरे धृतं यया ।
सा त्वमम्ब लहरी शिवाम्बुधेः
क्षेपसंप्रकटनग्रहोन्मुखी ॥ २२२ ॥
यः परो निरुपसर्गतः परः
स्यान्महानपि च केवलः शिवे ।
उत्तरश्च विषयात् स[8] च त्वदा-
नन्द उल्लसति चिद्घनासि यत् ॥ २२३ ॥
विश्वसंहृति[9]पदे लयोज्झिते
लीयसे[10] यदि निरंशतः शिवे ।
सृष्टिकालयसि यया बहिः पदे
क्षिप्तमम्ब जगदाशु गृह्यते ॥ २२४ ॥

१ लगाल २ परा ३ यः प्रका ४ लक्ष्यते ५ यः स्फुटं निखिलकल्पनार्णवा ६ र्मिरिति ७ लीलया ८ षयोत्सवस्तदा ९ संहृति १० यते ।

लब्धमास्यपवनं[1] च या हृतं
वातचक्रमधितस्थुषी शिवे ।
निगमागममहो[2]ज्झितान्तरा
त्वं स्थितं ग्रससि हि स्थिताम्बिके ॥ २२५ ॥

या च[3] खान्तरहुताशनिर्गता
धामचक्रमवभिन्दती क्रमात् ।
ऊर्ध्वसोमरसपानदीपिता
साऽपि देवि कलये बहिः स्थितम् ॥ २२६ ॥

बर्हिणोऽण्डरसवद्‌यदन्तरे
शब्दतः प्रभृतिचित्रितासनः[4] ।
अर्थपञ्चकमसौ त्वमुन्मनी
सन्धिपूर्वपदकल्पघस्मरी ॥ २२७ ॥

आत्मभावमखिलस्य जग्मुषी
त्वं शिवे निरवधिः सदोदिता ।
भावसंहृतिनिमेषविग्रहा
संहृतं कलयसि ह्यनावृतिः ॥ २२८ ॥

स्वैरखेलननिवेशिताः शिवे
आत्म[5]नात्तरुचयस्त्रयोदशः
अर्थपञ्चकमयाश्च वेदका-
स्त्वं विनीतघनसारमूर्छिताः ॥ २२९ ॥

१ ब्धसाम्यपवनद्वयाहृतं २ मपोज्झितान्तरे ३ शिखा ४ चित्रवासनं ५ त्मरक्ष ।

भक्षयन्त्यखिलमक्षजैः शिवे
शक्तिरश्मिभिरिमाश्च मातृभिः ।
ताश्च संस्मृतमया[1] महालये
रज्यता हरति विश्वविग्रहः ॥ २३० ॥
कालपालक[2]मुखं शिवान्तकं
विश्वमब्धिपतितोदबिन्दुवत् ।
पूर्णतां वहति यत्र दीप्तिचिद्-
घस्मरी त्वमिह साधु[3]काल्यसि ॥ २३१ ॥
एतदम्ब सदिदन्तु नेति नः
शङ्कया हृदि विकल्पलक्षणः ।
यो यमः स खलु काल्यते त्वया
भूतसंयमनकेलिकोविदः ॥ २३२ ॥
अम्ब कार्यकरणे नियच्छतः
पूर्णचित्पदमहोत्सवत्विषः ।
जृम्भितस्य हृदये स्वशङ्कया
त्वं यमस्य वपुषासि भीषणा ॥ २३३ ॥
वित्तदारमुखभोग्यगामिनी
या ममेत्यभिमतिर्मदोद्धता ।
याप्यहंकृतिरनात्मनि स्थिता
मृत्युरूपमुभयं तवासनम् ॥ २३४ ॥

१ स्मृतिमहालये परे २ पावक ३ साध्य ।

विश्वमम्ब कुरुषे तवासनं
मृत्युसेचनमखण्डितोदया ।
चिद्विकल्पमयमन्तरुद्यमं
गाम[१]नाहितजगत्क्रमं घ्नती ॥ २३५ ॥

शाश्वतप्रसरया चिदर्चिषा
दीपिता[२]खिलहृषीकमार्गया ।
अर्थपञ्चकमिदं तमो जगद्
भद्रमम्ब गमित तवान्तरम् ॥ २३६ ॥

वासनास्थितिमयी भवास्पदा
त्वं नियोज्य कृतविश्वसंहृतौ[३] ।
त्वद् भ्रुवा कुटिलया शिवेक्षणात्
संहृतः खलु भवः सवासनः ॥ २३७ ॥

कुर्वती जननि सृष्टिचित्रतां
या कला भ्रमति वेद्यमण्डपे[४] ।
ब्रूहि सा तव कलोन्मुखी[५] यथा
त्वं क्रियोत्कुटिलयात्त्यमूं तदा ॥ २३८ ॥

उन्मिषन्निमिषदर्कबिम्बया-
नन्तयाम्ब परमार्थमध्यतः[६] ।
अग्निमूर्त्तिरिह सृज्यते त्वया
भक्ष्यतेऽपि च सकृत्प्रभातया[७] ॥ २३९ ॥

---

१ कालमोहितजगत्त्रयं प्रति २ दीपिता ३ हृता ४ एडले ५ तात वलयोन्मुखी यदा ६ वृद्धतः ७ प्रथा त ।

भर्गनाम्न इह भारते शिखा-[१]
शक्तिरम्ब विषयेन्धनोन्मुखी ।
शान्तिधाम जुषि याति निर्वृतिं
त्वय्यसौ खलु शिवैकपावके ॥ २४० ॥
यो मृताण्डनिभमर्थपञ्चकं
प्राणिनः स्फुरति भामयो रविः ।
संहृतार्धमनुमन्तराहृतं
तं बहिः सृजति चार्थ पञ्चकम्[२] ॥ २४१ ॥
संहृतोर्ध्वनिकरस्मृतादधि[३]
व्यक्तमण्डतनुरम्ब भास्करम्[४] ।
काललक्षण कला प्रदीप्तये[५]
त्वं हि विश्वरसभक्षमास्थिता ॥ २४२ ॥
भूतचक्रमधुकोशसंभृतं
तत्तदर्थमधु पातुमुत्सुका ।
यन्मरीचिविषयाः[६] सभास्कर
त्वद्रुचौ शलभवत्प्रलीयते ॥ २४३ ॥
प्राण एष यमकाल उच्यते
मध्यवाहतनुरग्निमम्ब[७] यः ।
रुद्रमेतदुपनोय खं परं[८]
तत्र सर्गविमुखं करोष्यसौ[९] ॥ २४४ ॥

१ वेनला: २ र्थविग्रहम् ३ स्तुतावधि ४ भास्वर ५ प्रदत्तये ६ विषयं सभास्करः ७ रश्मिरम्ब ८ खण्डदं ९ तनोष्यसौ ।

त्वत्क्रमोपहृत[1] भानुमण्डल[2]
क्रोध एष त्रयवह्निरुद्धतः ।
विश्वभक्षणरसा मरीचयो
यस्य भीमविभवा[3] स्त्वयाहृताः ॥ २४५ ॥
ग्राह्यमत्र पुरतो हरस्य[4] ते
यं[5] पुनर्ग्रहणमप्यसुं पुनः[6] ।
ग्राहकाश्च वरदे मरीचयः
तास्त्वदर्पितजगद्विजृम्भणाः ॥ २४६ ॥
यः श्मशान इह भूतघस्मरे
रज्यतेऽम्ब करवीरनामनि ।
ग्राहकं ग्रससि[7] तं श्रुतं महा-
कालमप्यसुहुताशदुर्ग्रहाः[8] ॥ २४७ ॥
दिक्चरी दशसु दिक्षु या बहि-
स्तत्तदिन्द्रियमयीषु जृम्भते ।
अन्तरम्ब[9] करणत्रये च या
खेचरी गलसि ते च तत्प्रिये ॥ २४८ ॥
त्वष्टुरम्ब शिवबोध[10] भास्वतः
सृष्टितः प्रभृति या मरीचयः ।
द्वादश क्रमपदत्रयोर्ध्वगा-
स्तासु संचरसि वा[11] त्रयोदशी ॥ २४९ ॥

१ पहृत २ गडलं ३ ममयाः स्ववा ४ रन्ति ५ यत् पृथग् ६ ततः ७ सति ८ र्प्यनुहुताशदुर्गहः ९ रा च करणां दयेच्छया १० वरूप ११ हि ।

सक्रमाक्रमविमिश्रभावत-[1]
स्त्वत्क्रमस्त्रितय चारुवीक्षणा ।
तुर्यरश्मिगणविक्रमैकभू-
स्त्वं क्रमत्रिगुणभीमकाल्यसि ॥ २५० ॥

यत्र कालि दश ते कराः स्थिता
द्वेच यान्त्युदयमप्यमूर्यतः ।
तन्नभः श्रयसि सर्वतः परं
त्वं प्रकाशशिवचन्द्रिका सती ॥ २५१ ॥

शान्तमम्ब यदभिन्नमम्बरं
यत्प्रकाशघनमप्यपोह्यते ।
यद्द्वयोभयपदस्त्रिरेचना-[2]
द्यत्रमुक्तनिकरो निलीयते ॥ २५२ ॥

त्वं पदं[3] त्रितयगर्भितोदयं[4]
निर्वपोहमुपगूह्य शङ्करः[5] ।
एकरस्यलसदद्वयप्रथा
नादमुल्लससि सर्वतः शिवे ॥ २५३ ॥

ये विदन्ति तव रूपमीदृशं
ये च नित्यकृततल्लयोद्यमाः ।
एष तान् प्रतिभवन् सुधामयो
येऽन्यथा विषमयश्च तान् प्रति ॥ २५४ ॥

---

१ भास्वतः २ दातिरोचना ३ पदत्रि ४ मर्भतो ५ रम् ।

यः प्रमज्जयति मूढचेनस-[1]
स्तारयत्यपि स एष धीमतः ।
येन तद्भवसुधाम्बुधिः शिवे
यज्जुषां वहति निस्तरङ्गताम् ॥ २५५ ॥

अर्थपञ्चकसुधा प्रपूरिते
यद्भवामृतनिधौ सुखप्लवे ।
पद्यतां वहसि संविदिन्दिरा
धामवस्तु तदुमे वपुस्तव ॥ २५६ ॥

तत्र पद्मरुचिवेद्यमण्डले[2]
स्वादुनि प्रकटमेयिवान् लयम् ।
माययाम्ब पुरुषो निमीलितः
त्वद्धियोन्मिषति विद्ययावृते[4] ॥ २५७ ॥

तत्तदर्थदलशोभितं जहन्-
निद्रमुल्लसितमम्ब वारिजम् ।
त्वं[5] विमर्शमकरन्दनिर्भरं
वीरतां[6] व्रजति यत्र चिन्मयम् ॥ २५८ ॥

त्वं मलत्रयविलापिनी शिवे
पूर्णपीठमहमात्मकं श्रिता ।
शुद्धभानु[7] तनुरद्वयप्रथा
नन्दसाररसवाहिनी सताम् ॥ २५९ ॥

---

१ तनः २ यग्भुषां ३ गडपे ४ याकृतिः ५ त्वद्धिम ६ पीठतां ७ हृद्यप्रथाननं ।

सत्सुधाब्धिरसभृत् कलान्तरी
गर्भषोड़शकलाब्जविष्टरम् ।
प्रेतमुज्भितगमागमं शिवे
स्मेरहृच्छिरसिजं[1] त्वमाश्रिता[2] ॥ २६० ॥
निष्कलङ्कमन[3]वेक्षितंन्वयं
यामिनीदिवसतूलजृम्भणम् ।
स्वप्रकाशविनिमग्नचिज्जडं
चन्द्रवर्ष्म यदि चण्डिके समम् ॥ २६१ ॥
यत्र[4] कुण्डलशिखाकुलस्थिता[5]
ये भवन्त्यकुल बिन्दुशालिनः ।
ते बिदन्ति न[6] तवाम्ब वैभवं
पूर्णभानमयविश्वघस्मरम् ॥ २६२ ॥
ज्योतिषाम्ब शिखया स[7] हन्यते
पुंसि चैतसिकमुद्धतं तमः ।
यत्पथप्रथनलक्ष्मपुङ्खितं[8]
तत्वमेव शिवशक्तिरप्यसि ॥ २६३ ॥
निह्नुतोदितशतार्कदीधिति-
च्छन्नचन्द्रशतलक्ष्मचन्द्रकम्[9] ।
त्वं विभर्षि वपुरम्ब भात्मकं
तत्प्रवेश्य[10] कुरु मामनामयम् ॥ २६४ ॥

१ स्मेरभूः सरसिजं २ मास्थिता ३ नपेक्षितक्ष ४ ये त्वमण्ड ५ ताः ६ नु ७ यापह ८ पुङ्गवं ९ चन्द्रिक १० त्वत्प्रविश्य ।

त्वं कुलाख्यशशिभानुपावक
त्वं निवेश[1]करणात्मनायिके ।
संस्मृतासि मुनिचित्तमण्डपे
अद्य[2] मे कुरु तवाङ्घ्रिसंस्तवम् ॥ २६५ ॥

पञ्चवाहगति[3]शक्तिलक्षणै
स्त्वन्मुखैरखिलमर्थमण्डलम् ।
गृह्णती मयि निवेश्य चण्डिके
या करोषि सहजं तवाध्वरम् ॥ २६६ ॥

त्वत्पदस्मृतिविधूत कल्मषं
सर्वतः स्फुरति[4] पूर्णभाघनम् ।
सिद्धचक्रमिह मोदते शिवे
पूर्णिमाध्यहह मे न तापहा ॥ २६७ ॥

भूतभाविभवदर्थगर्भितं
कालघस्मरमुपास्यते वपुः
कालकर्षिणि वहन्ति योगिनः
कृष्णतः प्रभृति विश्वरूपताम् ॥ २६८ ॥

स्पर्शरूपरसगन्धरूपजं
शब्दचिद्विलसभा विभिन्दति ।
वृत्तिचक्रमकृताः षडध्वनो
देशकालमयमूर्त्तिचक्रगाम् ॥ २६९ ॥

१ भ्राजमान २ अम्ब ३ गत ४ स्फुरित ।

यत्प्रकाशतमुपञ्चकं पदं
तस्य भाव इह यः सतोऽम्बिके ।
इन्दुवह्निरविलक्षणाकुलं[1]
त्वं तुरीयपदगाम्य[2]नङ्क्ष्यसौ ॥ २७० ॥
अम्ब नन्दति समन्ततः शिवे[3]
लोकनेन य उदग्रवैभवः ।
प्रज्ञया वहति सार्वभौमया
यश्च नेत्र[4]मयमर्चिता तव ॥ २७१ ॥
वृत्ति[5]दीप्तिनयनैर्विलक्षणै-
र्वीक्ष्य कालि महिमानुवर्ण्यते ।
केवलं तदनु वर्णनेऽप्युमे
त्वन्मुदे तदपि दासजल्पितम् ॥ २७२ ॥
न त्वमम्ब पुरुषश्च[6] नाङ्गना
चित्स्वरूपिणि न षण्डतापि ते ।
नापि भर्त्तुरपि ते त्रिरूपता
त्वां विना तदपि न स्फुरेत्त्रयम् ॥ २७३ ॥
ईश्वरो जननि चिन्तितः प्रदः
कोऽप्यनादिनिधनो महामनाः ।
त्वत्प्रथा त्वमसि विश्वघस्मरी
त्वां ततः क इह भेत्तुमर्हति ॥ २७४ ॥

---

१ रक्षणं कु २ गाप्पन ३ शिवो ४ नैतृम ५ व्यक्ति दिव्य ६ षो नचा ।

रक्तशुक्लतनुहंसभेदिनो
त्वं पतिश्च तव तत्कृताकृतिः ।
भानु[1]शाङ्करविभेदतस्तव
स्त्री च[2] काप्यपि पुमानिव स्वयम् ॥ २७५ ॥

रूपमम्ब तव भास्वरं पुरो
वर्णपञ्चक विभेदितं[3] पुनः ।
त्वद्विमिश्रणमपि ह्य[4]सुस्थितं
चित्रसंज्ञितमतश्चतुर्विधम् ॥ २७६ ॥

भासनावरणशक्त्यधिष्ठितो
ज्योतिरञ्जनमथो[5] द्विधा तव ।
विग्रहाभरण[6]बिन्दुशर्वरी
संज्ञ उद्भवभवः स्फुटोदयः ॥ २७७ ॥

अञ्जनेन रुचिमिश्रणे समे
रक्तमुल्लसति तावकं वपुः
श्यामनीलतनुताञ्जनेधिके
पीतशुक्लतनुता च ते रुचौ ॥ २७८ ॥

सौम्यता तव सिसृक्षया तनोः
सा तथाप्यथ रिरक्षिषा यदा ।
घोरता पुनरियं जिहीर्षया
संस्मृतेऽम्ब तव धाम्नि शान्तता ॥ २७९ ॥

१ भान २ स्त्रीव काप्यसि ३ निदर्शितं ४ ह्यनु ५ मयो ६ विग्रहो जननि ।

भास्वरे वपुषि सर्वगे तव
स्पष्टमण्डनिवहो निमज्जति ।
कालवह्न्यधिकृतौ[1] शिवे यथा[2]
तत्समुल्लसि[3]तदीप्तिपञ्जरे ॥ २८० ॥
तावकं त्रिविधरूपवर्जितं
गर्भितत्रिविधरूपमम्बिके ।
चिन्मयं परमरूपलक्षणं
रूपमन्तरवभाति तद्बहिः ॥ २८१ ॥
स्त्रीति नाम तव क्वापि कल्पना
स्त्रीतिरूपमयि तादृशी च धीः ।
वस्तुतस्त्वमसि विश्वविग्रहा
तत्परा च चितिरेव शङ्करी[4] ॥ २८२ ॥
त्वं चतुर्थपदवर्त्तिनी शिवे
यद्द्वितीयमपि तत्पदं स्थिता ।
योऽपि पञ्चमपदाश्रितः शिवे
यस्तृतीयमपि तत्पदं स्थितः ॥ २८३ ॥
यत्पदं प्रथममेतदुत्तरे
तत्परे तदपि तुर्यगामिनी ।
त्वं तुरीयतनुराहृतत्रिका
पञ्चमं विशसि पूरितत्रिकम् ॥ २८४ ॥

१ कृता २ यदा ३ ल्लसति ४ शाङ्करी ।

अम्बरेश्वरि निराकृतस्तव
व्यज्यते निखिल भा[1] कृतित्वतः (?)।
सर्वदा स्फुरसि यूयमद्वया-
नन्दचित्प्रसरपीठवर्त्तिनी ॥ २८५ ॥
न श्रुतिर्न च गिरो न चागमाः
खण्डवस्तु विनिवेशिताशयाः।
त्वां नयन्ति परमेशि[2] तं मखा
यागयोगविधयश्च नेदृशी ॥ २८६ ॥
नित्यतादिगुणलक्षिते पदे
ज्ञानयोगमुखकल्पनापि ते।
अम्ब न त्वदनुभूतिदायिनी
त्वल्लयैकगुरुसंश्रयं बिना ॥ २८७ ॥
व्योमभावविनिविष्टचेतसं
प्रातिभं जगदवेद्य निन्दिताः।
ते त्वमाविशसि याननारतं
त्वन्नयेन गुरुणाम्बवीक्षितान् ॥ २८८ ॥
नित्यता त्वयि विभुत्वपूर्णते
दृक्क्रिये स्वरसगोचरे च ये।
तानि तान्नियतीव शोषने
रागवेदसकलाश्च भान्त्यथ ॥ २८९ ॥

१ माकृ २ परमेशितुं।

व्योमवृत्तिघटितैक्य उल्लस-
त्यद्वयो जननि देवतागणः ।
तावकोद्यमपदेऽपि सर्वगो
द्रागिवलापनपदं विनापि ते ॥ २९० ॥

इत्थमम्ब तव वृत्तिपञ्चक-
स्योदयोद्भुतविभागसंभ्रमः ।
सर्वदा स्फुरति सर्वतः परं
खण्डितेतरनिजस्वरूपभाक् ॥ २९१ ॥

खण्डितेतरसमस्तगर्भगो
यस्त्रिपञ्चविसराश्रयो क्रमः ।
देवताक्रम उदेत्यनारतं
तस्य हि त्वमसि देवजन्मभूः ॥ २९२ ॥

दिव्यवाहविभवोदरस्थितो
रश्मिमण्डलसमुद्गमास्पदम् ।
अव्ययान्तनव[1] हार्णविग्रहे (?)
संहृतिक्रम उदेत्यकल्पितः ॥ २९३ ॥

लक्ष्यशून्यसहजाश्रमोदया-
रम्भपूर्णा निजकोट्यभेदिनी ।
रश्मिचक्रतनुरश्मितोज्झिता
त्वं च गौरि वरपुण्यवासनम् ॥ २९४ ॥

१ नञ्ज ।

अध्वविध्वनिविमिश्रवक्रयो
रञ्ज[1]बीजमनिकेतनं वरम् ।
कल्पनैक्यबहुचेदमद्वयं
मन्त्रपीठमसि कालयनर्गलम् ॥ २६५ ॥

स्पन्दमम्ब परिपूर्णमप्यभूः
स्पन्दमुज्झितपदं निरावृति ।
व्योमरूपमखिलक्रमास्पदं
पीठमावधिक विद्ययाम्ब या ॥ २६६ ॥

अष्टयोनिदलपत्र पूरुषं
त्वन्तवृत्तिदलशक्तिपेटिका ।
त्वं पतिश्च तव लिङ्गविग्रहो
रुद्रसिद्धमुनिवृन्दबन्दिते ॥ २६७ ॥

सृष्टितः प्रभृति यच्चतुष्टयं
यत्प्रकाशनिभमूर्त्तिबृन्दजम् ।
यश्च खण्डपदमम्ब पीठगं
देहि चक्रनवकं नुतं तव ॥ २६८ ॥

त्वं नवार्णमनुचक्रविग्रहा
स्वोदरार्पितसमस्तदेवताः ।
देवि सप्तदशवर्णभेदिता
त्वं प्रकाशशिवचन्द्रगामिनी ॥ २६९ ॥

---

१ नञ्ज ।

यः शिवात्प्रभृतिसोमपश्चिम-
स्त्वत्क्रमैकरसिको गुरुक्रमः ।
आननाग्रमिह चक्रभानुतो
यस्त्वमेतदुभयं त्वया यया ॥ ३०० ॥

तत्तदर्थपुरुषोधृतक्रमः
प्रातिभस्फुरितदिव्यविग्रहम् ।
अक्रमस्तव वरं पदं शिवे
योऽहमद्वयविमर्शलक्षणः ॥ ३०१ ।

लक्षणान्तदनुसूक्ष्ममिष्यते
ज्योतिरात्मकमवर्णमास्थिता ।
स्थूलमेतदनुवर्ण्य लक्ष्यते
भाव्यतो शमयितुं मनोमया ॥ ३०२ ॥

तत्र शान्तवति पौरुषो मल
व्योमवद्गतमवेद्या त्वया ।
सिद्धकार्यकरणं निरंकुशं
चिन्मरीचिविसरेण मङ्गले ॥ ३०३ ॥

सोमपुत्रमपनेष्य मद्गत-
स्त्वत्क्रमोऽद्य किमपि स्तुतो मया ।
ग्रस्तभीषणभवोऽयमम्बिके
त्वत्पदाम्बुज विमर्श तेजसा ॥ ३०४ ॥

मुक्तमेव न मया मयोचितः
प्रेरितोऽस्मि तव तर्त्तिनी त्वया ।

सिद्धनाथ कृततत्क्रमस्तुतेः
कालिदासरचितां च पञ्चिकाम् ॥ ३०५ ॥
यद्व विनिश्चयपदं च ते स्तवं
योऽम्ब वेद कुरु तन्मुखं जगत् ।
कालिदासपदवीं तवाश्रितः
त्वत्प्रसादकृतवाग्विजृम्भणः ॥ ३०६ ॥
त्वद्गुणान्यदहमस्तु वै जगत्
तेन मोहमतिरद्य मुच्यताम् ।
पूर्णपीठमवगम्य मङ्गले
त्वत्प्रसादमकृते मया कृतः ॥ ३०७ ॥
एष चिद्गगनचन्द्रिकास्तवः
किन्नुवाञ्छितमसूत मां प्रति ।
यः पठेज्जपति देवि ते स्तुति
योऽर्थमत्र विवृणोति वेत्ति यः ॥ ३०८ ॥
योऽनुगात्यभिनयत्यभीप्सितां
तच्च तस्य कुरु सिद्धिमीश्वरि ।
काल वर्षिणि शतैस्त्रिभिः स्तुतिं
तावकीमिह नवोत्तरैः कृताम् ॥ ३०९ ॥
त्रैष्टुभैरहरहः परामृशन्
कालचक्रमतियन् प्रसीदति ।
कर्तुमिच्छति शिवं शिवे नृणां
ज्ञायते तदविचार्य या त्वया ॥ ३१० ॥

क्षेपधीस्तवन गौरि तत्कृता
विश्वराशि कुरु सर्वमीप्सितम् ।
केवलं मम पुनस्तदीप्सितं
सर्वतस्तव मदीक्षणः शिवे ॥ ३११ ॥
येन खेलन सरोहणार्णवः
शश्वदाविशति येन मां शिवः ।
पूर्णपीठकृतं सिद्धेस्तद्भावस्तवमादरात्
वानरार्थं (?) महागुह्यं श्रीवत्सो विदधे सतु ॥३१२

इति श्रीकालिदासमहाकविविरचिता
विदुगगनचन्द्रिका
सम्पूर्णा ।
श्रोः

## महार्थमञ्जरीधृत-चिद्गगनचन्द्रिका वचनानि



५ हृद्गुहामभिलषन्नहन्तया
हृक्क्रियावपुरदृक्क्रियात् पदात् ।
सन्तमेमि समभावदं शिवं
सख्यहानिरमुना हि सूतये ॥ म० म० २८ पृ०

६ पूरणात् पुरुषतामुपेयुषि „ ५३ „

७६ ईरणेन विविधेन वीरतां
योऽयमक्षरगणः प्रपद्यते । „ ७१ „

६ याहमित्युदितवाक् ( परावसा ? परामिधा )
यः प्रकाश उदितार्थविग्रहः ।
द्वौ मिथः समुदिताविहोन्मुखौ
तौ षडध्वपितरौ श्रये शिवौ ॥ „ ७३ „

११७ अन्तरम्ब बहिरप्यमी करा
ये तवाक्षतनवोऽङ्क एष यः ।
विग्रहो द्वितयमप्यतः परं
चिन्नभो नयसि नः करङ्किणी ॥ „ ६३ „

१२८ ज्ञानदीधितिषु रौद्र्युदेति ते
मन्त्रदीधितिषु वामयोदितम् ।
योगदीधितिषु जृम्भतेऽम्बिका
ज्येष्ठयेत्थमधिशक्तिदीधिति ॥

१२६ देव्यभेदितकलाचतुष्टयी
शम्भुदीधितिषु दीप्यते स्वरः ॥ म० म० ६६ पृ०

२४८ अस्वरोल्लसनबीजमग्रिमो-
च्छुनतावपुरपाकृतक्रमः ।
नाद एष तव विश्वदेशिकः
कोऽपि संहिति विमर्श ईश्वरे ॥ ,, ६६ ,,

१०८ पञ्चसु स्फुरति देवि वृत्तिषु
त्वन्मयीषु यदि काचन स्वतः ।
शश्वदाशुनिखिलास्तु देवताः
सामरस्यमधिरुह्य भान्त्यमूः ॥ ,, १०२ ,,

६५ राजनात् प्रकृतिरञ्जनाच्च मां
राजसंज्ञमनुबोधकर्मणोः ।
षट् त्वया पृथगमी प्रवर्त्तकाः
पुत्रभावमधिरोपिताः शिवे ॥ ,, १०३ ,,

७३ चाररावचरुभिर्विभेदितै-
र्मुद्रया च यदुपासनं तव ।
तद्वशेन भजते परम्परा
तावकक्रमगता स्फुटीकृतम् ॥ ,, ११० ,,

१२७ कल्पनापि न मृषाफलं शिवे
यत् स्थितं गरुड़भावनादिजम् ॥ ,, १२४ ,,

२२३ यत्परो निरुपसर्गतः परः
स्यान्महानपि च केवलः शिवे ।

उत्तरश्च विषयात् सच त्वदा
नन्द् उल्लससि तद्धनासि यत् ॥ म० म० १३१ पृ०
१६५ वह्निवारिमुकुरादिषु स्फुटं
स्वच्छवस्तुषु कुमारि विम्बता ।
मन्त्रिना सह परिच्छदेन यत्
तेन बिम्बमनवेक्षितं तव ॥ „ २५४ „
२३ मातृमेयमितिसाधनात्मिका
त्वत्कृतोन्मिषति या विकल्पधीः ।
त्वत्स्वरूपमकलङ्कितं तया
तस्य देवि विदुषो न मुक्तता ॥ „ २६७ „
१२० ग्रन्थयो द्विषडुमे यया धृता
सा[1] निरावरणचिन्नभः प्रदा ।
स्पन्दमूर्त्तिधृतभेदडम्बरा
भैरवी त्वमसि विश्वमेलिनी ॥ „ ६४ „
१२१ अष्टपूर्युदितबीजवासना
संहृतिप्रवणरश्मिपुञ्जया ।
लीढमात्रमुखभेदया त्वया
भूयते जननि लेलिहानया ॥ „ ६५ „
१२२ त्वं पराप्रभृतिवैखरान्तिमो
लेखविस्तरविलापनोन्मुखी[2] ।

---

१ या २ पकोम्मु ।

देव्यनावरणशम्भुसद्मगा
खेचरी भवसि चिद्विकासिनो ॥ म० म० ६५ पृ०

१२३ वह्निसूर्यशशिधामघस्मरी
कुण्डली तड़िदिवोत्प[1]तन्त्यसौ ।
शाम्भवं जननि बिन्दुमध्वना
मध्यमेन च मतासि खेचरी ॥ ,, ,, ,,

३१ नादबिन्दुलिपिविग्रहागिर-[2]
स्त्रिस्त्र ऊर्ध्वगविमर्शशीकराः ।
संहृतिस्थितिविसृष्टिधामसु
व्यापृतस्त्वदध ईश वल्लभे ॥ ,, १०४ ,,

अम्ब केचिदमृताम्बुचिन्मयी
लम्बिकांकुरशिखावलम्बिनीम् ।
तानुमूलबलयी कृताग्रया
जिह्वया कवलयन्तिते कलाम ॥ ,, १४५ ,,

---

१ पतत्यसौ २ गिरि ।

## योगिनीहृदय टीकायां उद्धृतानि चिद्गगनचन्द्रिका वचनानि ।



३२ यत्क्रियात्मशशिभानुमध्यगे
खे चरत्यनलदृष्टिधाम्नि यः ।
यत्तदूर्ध्वशिखरं परन्नभ-
स्तत्र दर्शय शिव त्वमम्बिके ॥ योगिनी हृ ६ पृ०
२१२ भोक्तृभोग्यमयगो वि[1] मर्शनाद्
देवि मां चिदु[2]दधो दृढां दशाम् ।
अपयन्ननलसोम[3] मिश्रणां
तद्विमर्श इह भानुजृम्भणाम् ॥ „ १० „
खेनिरस्तसकलक्रियाक्रमे
या चितिश्चरति शाश्वतोदया ।
सा शिवत्वसमवाप्तिकारिणी
खेचरीसकलखेदहारिणी ॥ „ ५५ ?
७२ मेयमातृमितिलक्षणं कुलं
प्रान्ततो[4] व्रजति विश्वमम्बिके ॥ „ ७२ „
४० षण्डवर्जमहिमद्युतेः[5] कला
बिन्दुसर्गरहिताश्च ये शुचेः ।

---

१ विसर्गगो २ दुदधेर्दृढां ३ मिश्रणः ४ सृजति यत्र विश्वमम् ५ स्वराः सर्गविन्दुरहि ।

सर्व एव शशिनः[१] कलाः शिवे
योनयो विधृतवीजतः स्वराः[२] ॥ योगिनी हृ १०३ पृ०
६ विश्वसद्मनि[३] चिदात्मनीश्वरे
पूरणात् पुरुषतामुपेयुषि ।
ये मनः प्रणिदधुर्महर्षय
( स्तान्[४] पतञ्जलिमुखानुपास्महे ) ॥ „ ११४ „
? भावनाग[५] ममतीन्द्रियं च य-
ल्लच्यमुक्तम् ॥ „ १४३ „
यत्र यत्र मिलिता मरीचय
स्तत्र तत्र विभुरेव जृम्भते ।
त[६]त्सतां हि नियमावलम्बिनां
ध्यानपूजनकथा विडम्बना ॥ „ १४६ „






१ कलाश्च ये योन २ बीजकाँस्तदा ३ शिवात्म ४ धनुश्चिनह्रान्तर्गतं नास्ति ५ गम्ये अती
६ तत्सतां निमसभावलम्बनं ।

## सौभाग्यभास्करधृतचिद्गगनचन्द्रिकावचनानि ।



भोक्तृभोग्यकरणोर्मिसंक्षये
सामरस्यरसदोहिनी शिवे ॥ ललिता १६१ पृ०
न त्वमम्ब पुरुषो न चाङ्गना
चित्स्वरूपिणी न षण्ढतापिते ।
नापि भर्त्तुरपि ते त्रिलिङ्गता
त्वां विना न तदपि स्फुरेदयम् ॥ ,, २६ ,,
मेयमातृमितिलक्षणं कुलं
प्रान्ततो व्रजति यत्र विश्रमम् ॥ ,, ५२ ,,
दृष्टदृश्यदृशिलक्षणं जगत्
प्राक्स्मृतेस्त्वयि तदम्ब संहृतम् ।
उन्मिषत्यपि पुनस्त्वदुद्गमे
त्वल्लये निमिषति त्वदिच्छया ॥ ,, ८२ ,,
एतदम्ब सदिदं तु नेति नः
शङ्कया हृदि विकल्पलक्षणः ।
यो यमः स खलु कल्पते त्वया
भूतसंयमनकेलिकोविदः ॥ ,, १५३ ,,
हृत्क्रियात्मशशिभानुमध्यगः
खेचरत्पनलदृष्टिधाम यः ।
यत्तदूर्ध्वशिखरं परं नभ-
स्तत्र दर्शय शिवं त्वमम्बिके ॥ ,, १५७ ,,

---

# शुद्धिपत्रम्

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| १ | ४ | ०मासी शशधर- | ०मासीशशधर- |
| १ | ७ | हठाद्यः | हठाद्वः |
| १ | ८ | ०सिद्धा | ०सिद्धया |
| १ | १२ | स्तुतिर्व्या० | स्तुतिव्या० |
| १ | १५ | समुपा० | स्वयमुपा० |
| २ | ५ | ०णाद्धु० | ०णाद्ध० |
| २ | ११ | तत्र यो धर महन्तथै० | तत्र योदर-महन्नयै० |
| ३ | २ | स्फुरवि० | स्फुरण० |
| ३ | ६ | र्ध्व मू० | ०र्ध्वमू० |
| ४ | २ | ०दयो दयं | ०दयोदयं |
| ७ | १० | सुधामयः | सुधाम यत् । |
| ८ | १४ | शिवात्मके । | शिवात्मिके । |
| ८ | १६ | वाचको | वाचकः |
| ९ | १ | कला | कलाः |
| ९ | ८ | पारमेश्वरि | पारमेश्वरी |
| ९ | १० | योनियन्त्रमतिबुद्धिलक्षणाः । | यो नियन्त्रयति बुद्धिलक्षणः । |
| ९ | २० | भवस्वयम् । | भव स्वयम् |
| १० | ३ | यद्वया० | यद् द्वया० |
| १० | ७ | समेयुषि | समेयुषी |
| १० | १७ | ससृज्यते | स सृज्यते |
| ११ | ११ | ०रर्पणे | दर्पणे |
| ११ | १३ | शान्तत | शान्तता |
| १२ | ७ | भास्वतां | भास्यतां |
| १३ | ३ | ग्राहकं त्व० | ग्राहकत्व० |
| १३ | ५ | आस्थित | आस्थितः |
| १४ | ४ | ०रोपितः | ०रोपिताः |
| १४ | १४ | वितन्यते | वितन्वते |
| १४ | १८ | सामरस्य पद० | सामरस्यपद० |
| १४ | १९ | ०वेद्य वेदका | ०वेद्यवेदका |
| १५ | ४ | ०श्रित गुरु० | श्रितगुरु० |
| १५ | ७ | ०मय | ०मयुः |
| १६ | ६ | ०वनुषा | ०वपुषा |
| १६ | ९ | हिमहां० | हि महां० |
| १६ | १० | स्फुरण श० | स्फुरणश० |
| १७ | ७ | त्वदनुपाक्ष्य० | तदनुपाख्य० |
| १७ | ८ | द्रष्टिखं मनुरुमेतवा० | द्रर्ष्टखं मन्नुरुमे नवा० |
| १७ | १४ | नीराश्रये | निराश्रये |
| १८ | १९ | शून्यधाम वमति त्वमिष्ठित- | शून्यधामवसतित्वमिष्टिता |
| २० | १४ | यां | या |
| २० | १५ | यानि००विष्क० | यानि० ०विष्ट० |
| २० | २० | पङ्कि० | पङ्क्ति० |
| २१ | ३ | ०नोर्भि० | नोर्मि० |
| २१ | ४ | ०रोहि० | ०दोहि० |
| २१ | ११ | ०सिनः क्र० | ०सि निष्क्र० |
| २२ | १ | ०स्मितां० | स्मिता |
| २२ | १७ | ०तन तया० | ०तनतया० |
| २३ | १२ | परा | परां |
| २३ | २० | ०वक्त्रधि० | वक्त्रमधि० |
| २४ | ७ | निर्मिके० | निर्निके० |
| २४ | १७ | ०रणास्वयं | ०रणास्पदं |
| २५ | २ | चिन्नभः पदा | ०चिन्नभःपदा |
| २६ | २ | षण्ड व० | षण्डव० |
| २६ | ११ | खेचरी ज० | खेचरीज० |
| २६ | १६ | ज्येष्ठयेव० | ज्येष्ठयैव० |
| २६ | १७ | ०कला चतु० | ०कलाचतु० |
| २७ | २ | ०ना भिदा | ०नाभिदा० |
| २७ | ४ | स्पारिता | स्फारिता |
| २७ | ६ | या नि० | यो वि० |
| २७ | १२ | ०मर्थ वि० | ०मर्थवि० |
| २८ | १५ | स्वानि० | खानि० |
| २८ | २० | त्वत्वि० | त्वत्त्वि० |
| २९ | ६ | ०श्वरि | ०श्वरी |
| २९ | १० | खेचरि | खेचरी |
| २९ | १४ | दियुषी | दीयुषी |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ३० | ५ | प्रनृत० | प्रभृत० |
| ३० | ११ | ०कविका० | ०कलिता० |
| ३१ | ६ | यानिरङ्कमो | यो निरङ्कमा |
| ३४ | ८ | तेऽन्वयः क्रमः | तेऽन्वयक्रमः |
| ३४ | १५ | कालकर्षिणे | कालकर्षिणी |
| ३४ | १८ | स्वस्वमर्थनिवहो | स्वं स्वमर्थमिह यो |
| ३४ | २० | गतः | गता |
| ३५ | २ | तुर्यथागमः | तुर्यधामगः |
| ३५ | ३ | ०रात्मगां | ०रात्मगाः |
| ३५ | ६ | ०श्रयः | ०श्रया- |
| ३५ | ११ | ०मधात् | ०मधुः |
| ३५ | १७ | फलना | कलना |
| ३६ | १ | भान्त्य० | भात्य ० |
| ३६ | ४ | यं | यः |
| ३६ | ८ | ०श्न्यः | ०ञ्चयः |
| ३६ | १४ | ०मास्पपदम् | ०मास्पदम् |
| ३६ | २० | ०दर्शनः | ०दर्शनम् |
| ३७ | ६ | स्थितो | स्थितौ |
| ३७ | १६ | स्तां | स्तान् |
| ३८ | ८ | ०कुसुमैय० | कुसुमैर्य० |
| ३८ | ११ | ०निभरा | ०निर्भराः |
| ३८ | १४ | मातृ० | र्मातृ० |
| ३६ | ३ | प्रवेदयषि | प्रवेदयति |
| ३६ | ४ | साध्यते | साधयेत् |
| ३६ | ८ | स्थिताः | स्थिता |
| ४० | ६ | ०प्रथम० | ०प्रथन |
| ४० | ७ | ०दर्शना | ०दर्शनात् |
| ४१ | १२ | सदती तम० | सदतीतम० |
| ४२ | ३ | ०या नु भ० | ०याऽनुभ० |
| ४२ | १२ | तत्रिधा | तत्त्रिधा |
| ४२ | १६ | निहनु तेन | निह्नुते न |
| ४२ | २० | अप्युमे | अप्युभे |
| ४३ | ६ | लक्षणाः | लक्षणा |
| ४४ | १ | यादृशासु | या दशासु |
| ४५ | ३ | तादृशी | तादृशीं |

| पृष्ठे | पंक्तौ | अशुद्धम् | शुद्धम् |
|---|---|---|---|
| ४५ | ७ | ०र्णवा | र्णव- |
| ४८ | १ | तवासनं | तवाशनं |
| ४८ | ८ | गमित | गमितं |
| ४६ | १४ | ०त्सुका | ०त्सुकाः |
| ४६ | १६ | ०त्वद्रु० | स्त्वद्रू० |
| ४६ | १६ | ०पनोय | ०पनीय |
| ५० | २ | त्रय० | लय० |
| ५० | १२ | दुर्ग्रहाः | दुर्ग्रहः |
| ५१ | ३ | ०रश्मिमण० | ०रश्मिगण |
| ५१ | १४ | निर्वपो० | निर्व्यपो |
| ५२ | १ | ०च्चेनस- | ०च्चेतस- |
| ५३ | ५ | ०क्षितंक्षयं | ०क्षितक्षयं |
| ५३ | १६ | तत्त्व० | तन्व० |
| ५४ | १ | ०पावक | पावके |
| ५४ | ६ | ०धूत क० | ०धूतक० |
| ५५ | १ | ०तमु० | ०तम० |
| ५५ | ४ | ०गास्य नङ्० | ०गाभ्यनङ्ग् |
| ५५ | १६ | ०रेत्रयम् | ०रेत्त्रयम् |
| ५५ | १७ | ०तः प्रदः | ०तप्रदः |
| ५६ | १ | ०भेदिनो | ०भेदिनी |
| ५६ | ६ | ०पञ्चक वि० | पञ्चकषि० |
| ५७ | ३ | कालवह्य० | कालवहृय० |
| ५८ | १ | निराकृतस्तव | निराकृतेस्तव |
| ५८ | २ | ०ल भा कृ | ०लभाकृ |
| ५८ | ३ | यूय० | येय० |
| ५८ | ६ | ०स्तु वि० | ०स्तुत्रि० |
| ५८ | ८ | नेदृशी | नेदृशीम् |
| ५८ | १६ | तावनियतीत्र शोषने | तानि वियतीव शोभने |
| ५६ | ५ | वृतिप० | वृत्तिप० |
| ५६ | ६ | ०गर्भगौ | गर्भगो |
| ५६ | १० | ०श्रयो | ०श्रयोऽ |
| ६१ | १३ | पौरुषो | पौरुषेऽ |
| ६२ | ७ | मस्तु वै | मस्तुवै |
| ६२ | १० | ०सादम० | ०सादन० |
| ६२ | १३ | स्तुति | स्तुतिं |